# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

[ त्रैमासिकी ]



चतुर्दशवर्षे ३ अङ्कः

संवत् २०१६

प्रकाशनतिथिः

आषाढशुक्लनवमी, संवत् २०१८

# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

[ त्रैमासिकी ]

सम्पादकः
श्रीक्षेत्रेशचन्द्रचट्टोपाध्यायः




चतुर्दशवर्षे ३ अङ्कः
संवत् २०१६

# विषय-सूची


१. प्रतिविम्ब-तत्त्व-समीक्षा—श्रीरघुनाथशर्मा वेदान्तविभागाध्यक्षः,
वा० सं० वि० वि० वाराणसी। १– ६

२. रसतत्त्व-विमर्शः—श्रीमुकुन्दशास्त्री खिस्ते साहित्यविभागाध्यक्षः,
वा० सं० वि० वि० वाराणसी। ७–१८

३. मानव-समुन्नतिक्रमः—श्रीअनन्तशास्त्री फडके पुराणेतिहासविभागाध्यक्षः,
वा० सं० वि० वि० वाराणसी। १९–२४

४. काशीस्थमानमन्दिरवेधालयीय-यन्त्राणि—श्रीविभूतिभूषणभट्टाचार्यः,
सरस्वतीभवनम्, वाराणसी। २५–३२

५. धर्मतत्त्व-विमर्शः—श्रीप्रेमवल्लभत्रिपाठी धर्मशास्त्रप्राध्यापकः,
वा० सं० वि० वि० वाराणसी। ३३–४४

६. श्रौतदेवतास्तत्संज्ञा हवींषि च—श्रीभगवत्प्रसादमिश्रः वेदविभागाध्यक्षः,
वा० सं० वि० वि० वाराणसी। ४५–५८

७. त्रैपुर-दर्शनम्—श्रीबटुकनाथशास्त्री खिस्ते साहित्यप्राध्यापकः,
वा० सं० वि० वि० वाराणसी। ५९–६६

८. प्राचीन-भारते नियुद्धकलायाः स्वरूपम्—श्रीनीलकण्ठ पुरुषोत्तम जोशी
सङ्ग्रहालयाध्यक्षः, इतिहासप्राध्यापकश्च
वा० सं० वि० वि० वाराणसी। ६७–७४

९. क्षयमास-विमर्शः—श्रीगणपतिदेवशास्त्री पञ्चाङ्गविभागाध्यक्षः,
वा० सं० वि० वि० वाराणसी। ७५–८४

१०. परिष्कार-प्रणाल्या उपयोगित्वम्—श्रीहरिरामशास्त्री शुक्लः साङ्ख्ययोगप्राध्यापकः,
वा० सं० वि० वि० वाराणसी। ८५–९०

११. भारतीयदर्शनेषु निर्विकल्पकज्ञान-
तज्ज्ञेययोः स्वरूपविकासः—श्रीजगन्नाथ उपाध्यायः बौद्धदर्शनप्राध्यापकः,
वा० सं० वि० वि० वाराणसी। ९१–१००


———

# सारस्वती सुषमा

वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

| १४ वर्षः | मार्गशीर्षपूर्णिमा, संवत् २०१६ | ३ अङ्कः |
|---|---|---|

## प्रतिबिम्ब-तत्त्व-समीक्षा

श्रीरघुनाथशर्मा वेदान्तविभागाध्यक्षः, वा० सं० वि० वि० वाराणसी।

या देवी सर्वभूतेषु छायारूपेण संस्थिता।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥

या बिम्बप्रतिबिम्बभावविदितव्यावृत्तविश्वात्मता
या बुद्धिः प्रकृतिः सृजत्यविरतं जीवान् पृथक् स्वाश्रयान्।
या बुद्धेः परतः पराऽस्य जगतो मूलं गुणैर्गुम्फिता
सा नैर्गुण्यगिरैकगीतगरिमा शक्तिः परा दीव्यतु ॥

अथातः समीक्ष्यते प्रतिबिम्ब-तत्त्वम्, यतो भोगे चापवर्गे चोभयत्र उपयोगस्तत्समीक्षायाः। तथा हि—भोगो व्यवहारसम्यग्ज्ञानपूर्वकाद् व्यवहारकौशलात् प्रसिद्ध्यति। साम्प्रतं हि दूरदेशस्थितानामपि शत्रुमित्रोदासीनानां व्यवहारः 'टेलीवीजन'-यन्त्रेण भवति। तत्र च विद्युद्वेगेन शब्दसन्दर्भ इव प्रतिबिम्बोऽपि समायाति। 'कैमरा'-यन्त्रेण च नायकयोरन्यतरस्योभयोर्वा शत्रुमित्रोदासीनानां तद्देशानाञ्च

सुशकं शोभनञ्च प्रतिबिम्वग्रहणां भवति। समागम-युद्धाद्युपयोगिविवादपदविलोप-सम्भावनायाञ्च 'कैमरा'-यन्त्रेण प्रतिविम्बग्रहणस्य च महान् उपयोगो व्यवहारे। अपवर्गमार्गेऽपि च 'अविद्याप्रतिबिम्बो जीवः, अन्तःकरणप्रतिबिम्बो जीवः, मायाप्रतिबिम्ब ईश्वरः' इत्येवं विधाः सन्ति बहवः सिद्धान्ता इति तत्रापि प्रतिविम्बस्य सत्यत्वासत्यत्वव्यवस्थाफलिका प्रतिबिम्बतत्त्वसमीक्षा उपयुज्यत एव।

एवं प्रतिबिम्बतत्त्वसमीक्षायामर्थवत्त्वेन प्रसक्तायां तदुपष्टम्भाय प्राक् प्रतिबिम्बतत्त्वविषये त्रयो विकल्पाः समुपस्थाप्यन्ते। ते यथा—१. बिम्ब एव प्रतिबिम्बः। केवलं तत्रोपाधिसन्निधानेन अन्यत्वं दर्पणाद्यन्तर्गतत्वञ्च अवभासते, न तु बिम्बात् प्रतिबिम्बस्य पृथगस्तित्वमिति विवरणकाराः। २. वार्तिककारास्तु—उपाधिसन्निधानेऽनिर्वाच्यं प्रतिबिम्बं रजतादिवत् समुत्पद्यावभासते। तत्र बिम्बमविद्या चेत्युभयमुपादानकारणम्, उपाधिस्तु निमित्तकारणमिति। ३. अयमपि च तृतीयः पक्षः सम्भाव्यते—बिम्बोपादानकं बिम्बसमसत्ताकं प्रतिबिम्बं व्यावहारिकमिति। तत्राद्यं मतद्वयं प्रथमश्लोकव्याख्याने अन्तःकरणप्रतिबिम्बस्य जीवस्य स्वरूपनिरूपणप्रसङ्गे उपन्यस्तं 'सिद्धान्तबिन्दौ'। तस्य च प्रतिबिम्बस्य सत्यत्वमेवेति प्रतिबिम्बवादिनः, मिथ्यात्वमेवेति आभासवादिनः। स्वरूपे तु न विवाद इत्यन्यत्। अचेतनविलक्षणत्वं तु तस्य श्रुतिसिद्धं प्रत्यक्षसिद्धञ्चेति।

उपपादितश्च प्रथमः कल्पः 'सिद्धान्तलेशे' द्वितीय-परिच्छेदे प्रतिबिम्बनिरूपणावसरे। तथा हि—"अत्र विवरणानुसारिणः प्राहुः, ग्रीवास्थ एव मुखे दर्पणोपाधिसन्निधानदोषाद् दर्पणस्थत्वप्रत्यङ्मुखत्वबिम्बभेदानामध्याससम्भवेन न दर्पणे मुखाध्यासः कल्पनीयो गौरवात्। 'दर्पणे मुखं नास्ती'ति संसर्गमात्रबाधात्। मिथ्यावस्त्वन्तरत्वे 'नेदं मुखमि'ति स्वरूपबाधापत्तेः, 'दर्पणे मम मुखं भाति' इति स्वमुखाभेदप्रत्यभिज्ञानाच्च। उपाधिप्रतिहतनयनरश्मीनां परावृत्य बिम्बग्राहकत्वनियमाभ्युपगमाच्च न बिम्बापरोक्ष्यसम्भवः। दर्पणे मिथ्यामुखाध्यासवादिनापि कारणत्रयान्तर्गतसंस्कारसिद्ध्यर्थं तटाकसलिले तट-विटपिसमारूढादृष्टचरपुरुषप्रतिबिम्बाध्यासस्थले कथमपि पूर्वानुभवस्य दुर्वचत्वात्। एवञ्च उपाधिप्रतिहतनयनरश्मीनां बिम्बं प्राप्य तद्ग्राहकत्वेऽवश्यं वक्तव्ये फलबलाद् दर्पणाद्यभिहतानामेव बिम्बं प्राप्य तद्ग्राहकत्वम्, न शिलादिप्रतिहतानाम्। अनतिस्वच्छताम्रादिप्रतिहतानां मलिनोपाधिसम्बन्ध-

दोषाद् मुखादिसंस्थानविशेषाग्राहकत्वं साक्षात् सूर्यं प्रेप्सूनामिव उपाधिं प्राप्य निवृत्तानां न तथा सौरतेजसा प्रतिहतिरिति प्रतिबिम्बसूर्यावलोकने साक्षात्तदवलोकन इवाशक्यत्वम्। जलाद्युपाधिसन्निकर्षे केषाञ्चिदुपाधिप्रतिहतानां बिम्बप्राप्तावपि केषाञ्चित्तदन्तर्गत-सिकतादिग्रहणमित्यादि कल्पनीयम्। लोकेऽवयविनः प्रत्यक्षं यथा कतिपयावयवदर्शनेनापि भवति, एवं बिम्बग्रहणमपीति न कश्चिद्दोषः।"

अद्वैतविद्याकृतस्तु—वस्तुप्रतिबिम्बस्य मिथ्यात्वमभ्युपगच्छतामभिप्रायमेवमाहुः—चैत्रमुखाद् भेदेन तत्सदृशत्वेन च पार्श्वस्थितैस्तत्प्रतिबिम्बं दर्पणे गृह्यत इति अनिर्वाच्यं तत्तत्रोत्पद्यत इति कल्प्यते। 'दर्पणे मम मुखमि'त्यभेदव्यपदेशस्तु गौणः। अत एव बालानां स्वप्रतिबिम्बे पुरुषान्तरत्वभ्रमेण जिहासोपादित्सादिः। 'नात्र मुखमि'त्यनुभवेन संसर्गितया मुखस्यैव बाधो न संसर्गमात्रस्य। किञ्च—नयनरश्मीनामुपाधिप्रतिहतानां बिम्बप्राप्तिकल्पने दृष्टविरुद्धं बह्वापद्यते। तथा हि—कथं जलसम्बन्धेनापि प्रतिहन्यमाना मृदवो नयनरश्मयः सूर्यमण्डलं किरणसमूहं विजित्य प्रविशन्ति, इत्येको दोषः। कथञ्च न चन्द्रालोकन इव तत्प्रतिबिम्बालोकने लोचनयोः शैत्याभिव्यक्त्याप्यायनमिति द्वितीयः। जलसम्बन्धेनापि प्रतिहन्यमानाः शिलादिभिः न प्रतिहन्यन्ते इत्यहेतुककल्पनारूपस्तृतीयः। उपाधिप्रतिहतनयनरश्मीनां स्वाश्रयगोलकं प्रति निवृत्तिनियमं विहाय यत्र बिम्बं तत्रैव गमनोपगमे च पृष्ठभागव्यवहितानामपि वस्तूनां ग्रहणं स्यदिति चतुर्थः। प्रतिबिम्ब-मिथ्यात्ववादिमते प्रतिबिम्बजीवस्य मिथ्यात्वेऽपि अवच्छिन्न-जीवस्य सत्यतया मुक्तिभागित्वोपपत्तिः। अत्र मते च प्रतिबिम्बजीवस्य उपादानमविद्या, "जीवेशावाभासेन करोति, माया चाविद्या च स्वयमेव भवति" इति श्रुतेः।

अन्ये तु—मूलाज्ञानमेव प्रतिबिम्बाध्यासोपादानमिति वदन्ति। तदुपादानकत्वेऽपि च न प्रतिबिम्बस्य व्यावहारिकत्वम्, अविद्यातिरिक्त-दोषाजन्यत्वस्य व्यावहारिकत्वे प्रयोजकत्वात्। प्रकृते च तदतिरिक्तबिम्बोपाधिसन्निधिदोषसद्भावेन प्रातिभासिकत्वोपपत्तेरिति।

अन्ये तु अत्रापि अपरितुष्यन्तस्तृतीयकल्पमेव रोचयन्ते। तत्र प्रतिबिम्बस्य व्यावहारिकसत्यत्वव्यवस्थापनाङ्गतया प्रथमं छायापदार्थ एव विमृश्यते। तत्र 'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः' ( अमरकोषः, का० ३, नानार्थवर्गः, श्लो० १५७ )

इति शक्तिग्राहककोशोपलब्ध्या प्रतिबिम्बोऽपि छायापदार्थः। तथा च छाया हि नाम 'शरीरादेस्तत्तदवयवैरालोके कियद्देशव्यापिन्यवरुद्धे तत्तद्देशे लब्धसत्ताकं तम एव' इति सिद्धान्तलेशे एवकारावधारणम्। 'न च मौक्तिक-माणिक्यादिप्रतिबिम्बस्य तमोविरुद्धलोहितादिरूपवतस्तमोरूपच्छायात्वं युक्तम्' इत्यादिसिद्धान्तलेश-वाक्यं न युक्तिसहम्। किञ्च—तमोरूपा छायापि अस्वच्छः प्रतिबिम्बविशेष एव, बिम्बस्य प्रतिरूपः प्रतिबिम्ब इति अवयवार्थानुगमात्। दृश्यते च छायायामपि शिरोहस्त-पादाद्यानुरूप्यम्।

किञ्च—दृश्यते प्रतिबिम्बेऽपि 'छाया'शब्दप्रयोगः। तद्यथा—

श्वेताभ्रघनराजीव वायुपुत्रानुगामिनी।
तस्य सा शुशुभे छाया वितता लवणाम्भसि॥

(वाल्मी० रामा० सुन्दरका०, सर्गः १, श्लो० ७७)

नहि तमोरूपायाश्छायायाः श्वेताभ्रघनराजीसादृश्यं लवणाम्भसि विततत्वञ्च समुपपद्यते। प्रतिबिम्बस्य च स्वच्छत्वमस्वच्छत्वञ्च उपाधिस्वभावभेदेन उपपद्यते। तथा हि—आलोकेतरोपाधिषु जल-तैल-मुकुरादिषु स्वच्छः प्रतिबिम्बः, आलोके चास्वच्छस्तमोरूपः।

एवं छायाया प्रतिबिम्बरूपत्वे व्यवस्थिते प्रतिबिम्बस्य व्यावहारिक-सत्यत्वं व्यवस्थापयितुं प्रयत्यते। तथा हि—प्रतिबिम्बो बिम्बाद् भिन्नाभिन्नो बिम्बोपादानको बिम्बसमसत्ताको व्यावहारिक उपाधिसन्निधाननिमित्तक इत्यभ्युपगन्तव्यम्। अन्यथा 'टेलीवीजन'-यन्त्रप्रयोगे शत-सहस्रादिक्रोशावस्थितबिम्बस्य प्रतिबिम्बं नोपलभ्येत, बिम्बदेशे नयनरश्मीनां गमनासम्भवात्। बिम्बासन्निधानेन अनिर्वाच्यप्रतिबिम्ब-स्याप्युत्पत्त्यसम्भवात्। प्रतिबिम्बस्य व्यावहारिकत्वे तु शब्दसन्दर्भस्येव अस्यापि विद्युद्वेगेन एतद्देशे सन्निधानमुपपद्यते। किञ्च—प्रतिबिम्बस्य व्यावहारिकत्वाभावे 'कैमरा'-यन्त्रेण तद्ग्रहणं न स्यात्। एवञ्च स्वभावभेदेनैव उपाधीनां प्रतिबिम्ब-ग्राहकत्वाग्राहकत्वे द्रष्टव्ये।

किञ्च प्रतिबिम्बविशेषरूपायाश्छायायाः स्पर्शवत्त्वं धर्मशास्त्रे स्मर्यते—"चाण्डालपतितां छायां स्पृष्ट्वा स्नानं समाचरेत्" इति। न चैतत् छायाया बिम्बरूपत्वे तदतिरिक्ततमोरूपत्वे वा घटते।

किञ्च सुन्दरकाण्डे प्रथमसर्गे सिंहिकाकर्तृकं हनूमच्छायाग्रहणं प्रतिविम्बस्य विम्बोपादानकत्वं साधयति। तथा हि—

प्लवमानं तु तं दृष्ट्वा सिंहिका नाम राक्षसी।
मनसा चिन्तयामास प्रवृद्धा कामरूपिणी॥
(वाल्मी० रामा०, सुन्दरका०, सर्गः १, श्लो० १८१)

इति संचित्य मनसा छायामस्य समाक्षिपत्।
छायायां गृह्यमाणायां चिन्तयामास वानरः॥
(श्लो० १८३)

समाक्षिप्तोऽस्मि सहसा पङ्गूकृतपराक्रमः।
प्रतिलोमेन वातेन महानौरिव सागरे॥
(श्लो० १८४)

प्रतिविम्बस्य विम्बोपादानकत्वाभावे विम्बानुगमाभावे च प्रतिबिम्बग्रहणेन विम्बस्य प्रतिरोधो नोपपद्येत।

किञ्च—मार्कण्डेयपुराणे 'संज्ञा' नाम्नी सूर्यपत्नी 'छाया'ख्यं चेतनं स्वप्रतिबिम्बं सूर्यतेजोऽसहमाना निर्मायान्यत्र गतेति स्मर्यते। यथा—

ततः पितृगृहे गन्तुं कृतबुद्धिर्यशस्विनी।
छायामयीमात्मतनुं निर्ममे दयितां रवेः॥
(अ० ७७, श्लो० ११)

तां चोवाच त्वया वेश्मन्यत्र भानोर्यथा मया।
तथा सम्यगपत्येषु वर्तितव्यं तथा रवौ॥
(श्लो० १२)

किञ्च 'दुर्गासप्तशतके' पञ्चमाध्याये—

या देवी सर्वभूतेषु छायारूपेण संस्थिता।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः॥

इति देवी-प्रतिविम्बस्य छायारूपस्य देवीरूपत्वमुच्यमानं प्रतिबिम्बस्य विम्बोपादानकत्वं प्रमापयति।

किञ्च—प्रतिबिम्बस्य व्यावहारिकसत्यत्वाभावे कथमन्तःकरणप्रतिबिम्बो जीवो व्यावहारिकः ? वेदान्तिनां मते हि ब्रह्मप्रमामात्रबाध्यत्वं व्यावहारिकत्वं स्वीक्रियते। तच्च प्रतिबिम्बरूपे जीवेऽस्त्येव। "रूपं रूपं प्रतिरूपो बभूव", "एकधा बहुधा चैव दृश्यते जलचन्द्रवत्" इत्याद्युपनिषत्सु हि जीवस्य प्रतिबिम्बरूपत्वं श्रूयते। गत्यागत्यादिरूपः कर्तृत्वभोक्तृत्वादिरूपश्च सर्वोऽपि संसारो व्यावहारिको जीव एवेति व्यावहारिक एव जीवः।

किञ्च न केवलं जीवरूपस्यैव प्रतिबिम्बस्य मूलाज्ञानोपादानकत्वम्, किन्तु सर्वस्यापि प्रतिबिम्बस्येत्यतोऽपि प्रतिबिम्बस्य व्यावहारिकत्वम्। दर्शितञ्चैतत् प्रागत्रैव।

किञ्च तन्त्रेषु छाया-पुरुषः साध्यते। पुराणेषु छाया-शुकः स्मर्यते। एतत्सर्वं कथं प्रतिबिम्बस्य मिथ्यात्वे संघटेत।

यत्तु प्रतिबिम्बोत्पादपक्षे दूषणमुक्तं 'वाक्यपदीये'—"पर्वतादिसरूपाणां भावानां नास्ति संभवः" इति, 'पञ्चपादिका-विवरणे' च—"तदपि उपादानपरिमाणस्य उपादेयस्वसजातीयपरिमाणजनकत्वनियम एवापतति'; न चैष नियमः, परमाणु-द्व्यणुकादिपरिमाणेषु व्यभिचारात्। तथा च दिनस्य पूर्वार्ध-परार्धभेदेन छायापरिमाणे बिम्ब-परिमाणवैसादृश्यं दृश्यते युज्यते च। एवञ्चोपाध्यल्पत्वमहत्त्वाभ्यां प्रतिबिम्बे परिमाणाल्पत्व-महत्त्वे" इति सौरालोकभेदप्रयुक्ते वा इत्यादिकमनुभवानुरोधात् कल्प्यते। तथा चैतया विचारसरण्या तृतीयकल्प एव साधुः प्रतीयते।

प्रार्थ्यन्ते चान्ते विश्वविद्वांसो यत् सिंहिका-प्रतिकृतियन्त्रनिर्माणाध्यवसायेन स्वदेशोपरि विनादेशं बलात् सञ्चरतां विदेशविमानानां छायाग्रहणेन गतिरोधाय प्रयतितव्यमिति।

---

# रसतत्त्व-विमर्शः

श्रीमुकुन्दशास्त्रिखिस्ते, साहित्यविभागाध्यक्षः, वा॰ सं॰ वि॰ वि॰, वाराणसी।

## रसस्वरूपम्

'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' इति भरतः। अत्र हेतौ पञ्चमी। हेतुत्वञ्च कारकत्वं ज्ञापकत्वं वा, ज्ञापकत्वेऽपि तद्विषयकानुमितिजनकज्ञानविषयत्वं वा, तद्विषयकप्रत्यक्षजनकज्ञानविषयत्वं वा, तद्विषयकशाब्दजनकज्ञानविषयत्वं वा।

तत्र कारकमतानुयायिनो भट्टलोल्लटप्रभृतयः। तेषामयमाशयः—'रत्यादयो हि न समवायेन नटे सामाजिके वा सम्भवन्ति, तदानीं तयोस्तदुत्पादकसामग्र्यभावात्। यतो हि शिक्षाभ्यासादिमात्रेण रामादिसरूपतां दर्शयतो नटस्य रत्युत्पादकसामग्र्या लेशोऽपि न शक्यते वक्तुम्। सामाजिकेऽपि सीतादिगतपूज्यत्वबुद्धेर्जागरूकतया रतेरुत्पत्तिरसम्भव्येव। अतः सीतादिदर्शनेन (विभावेन) तत्कार्यभूतेन भ्रूविक्षेपादिनानुभावेन, सहकारिणा चौत्सुक्यादिनानुकार्ये रामादावेव रतिरुत्पद्यते। सैव च रतिः निरतिशयसुखास्वादरूपो रसो नाम। नटे तु न तस्या वास्तविकी स्थितिः। किन्तु तस्य तद्रूपेण रूपितत्वादत्यन्तं सदृशयोर्भेदस्याप्रतीतेः सा भ्रमरूपैव। कथमन्यदीयसुखकारणैरन्यस्य रसोत्पत्तिः स्यादिति। ततश्च सूत्रे कारकहेतुत्वं तन्मते विवक्षितम्। निष्पत्तिरुत्पत्त्यर्थकः।

अत्राहुः—अनुकार्ये रामादौ रसोत्पत्त्यङ्गीकारे कथं सामाजिकेषु रसोद्बोधः? कथञ्च तेषां नाट्यादौ प्रवृत्तिः? न च रामादिशृङ्गारदर्शनेनैव सामाजिकानां रसोद्बोध इति वक्तुं युक्तम्; लौकिकशृङ्गारादिवत्तस्य चमत्काराहेतुत्वात्। किञ्च रामादिगतरतेरेव रसत्वे रसस्यानन्दात्मकत्वात्तद्गतक्रोधभीत्यादेरपि सुखत्वं वाच्यम्। तच्चैतदनुभवविरुद्धम्, नहि लौकिकदुःखकारणैः सुखोत्पत्तिः क्वचिदपि दृश्यते। अतो न पूर्वोक्तलक्षणो रसः, नापि सूत्रे कारकहेतुत्वमर्थः; किन्तु विभावादिभिरुक्तरूपैः संयोगादनुमाप्यानुमापकभावसम्बन्धाद्रसस्य निष्पत्तिरनुमितिरिति श्रीशङ्कुकादीनां द्वितीयं मतम्। प्रथमं जनो नटे लोकप्रतीतिभ्यो विलक्षणतया 'रामोऽयम्' इति प्रतिपद्यते, तथा गृहीते

च तस्मिन् पक्षे भ्रूविक्षेपादिकार्यकारित्वेन हेतुना 'रामः सीताविषयकरतिमान् भ्रूविक्षेपादिकारित्वात्, अस्मदादिरतिवत्' इति रतिमत्त्वं भूयो गृहीतव्याप्तिकैः सामाजिकैरनुमीयते ।

ननु नटे भ्रूविक्षेपादीनां कृत्रिमत्वात्कथं तैरनुमितिरिति चेन्न । अभ्यासपाटववशेन रोमाञ्चोत्कण्ठादीनामभिनयाद्वस्तुतः कृत्रिमैरपि भावनामहिम्ना तथाप्रतीयमानैस्तैरालम्बनोद्दीपनकारणैः स्थायिनो रत्यादेरनुमानस्य सुवचत्वात् । सैवानुमितिः सामाजिकैः क्रियमाणा रस इति ।

अत्राहुर्भट्टनायकादयः—नटस्य हि नटत्वेन ज्ञाने तत्र सीताविषयकरतिर्बाधिता, चित्रतुरगादिन्यायेन रामत्वेन गृहीतेऽपि 'रामः सीताविषयकरतिमान्' इत्यनुमित्या कथं सामाजिकानां रसोद्बोधः ? तत्र तेषामुदासीनत्वात् । स्वात्मनि रतिमत्त्वज्ञाने च सभ्यानां व्रीडातङ्कादिः केन वार्येत ? एवं च पक्षोऽप्रत्यक्षः । न च पक्षं विनानुमितिर्वक्तुं शक्यते, अनुमित्यसम्भवे च कुतो रसास्वादार्थिनां सामाजिकानां तत्र प्रवृत्तिः स्यात् ? किञ्च प्रत्यक्षमेव चमत्कारहेतुर्नानुमितिरित्यनुभवविरोधश्च । तथा सति कथं 'रसं साक्षात्करोमि' इत्यनुव्यवसायः स्यात् ? तस्मान्न पूर्वोक्तं सम्यक् । अपि तु "विभावादिभिः संयोगाद्भोज्यभोजकभावसम्बन्धाद्रसस्य निष्पत्तिर्भोगः" इति सूत्रार्थः ।

ननु कथमन्यगतैर्विभावादिभिरन्यगत एव स्थाय्यन्येन भोक्तव्य इति चेदाशङ्क्यते; तत्र वदामः—इह खलु शब्दात्मकस्य काव्यस्य त्रयो व्यापाराः—अभिधा, भावकत्वम्, भोजकत्वं च । तत्राभिधा तत्तत्पदार्थोपस्थितिप्रयोजिका । भावकत्वं साधारणीकरणापरपर्यायम्, तेन व्यापारेण विभावादयः स्थायी च साधारणीक्रियन्ते । अर्थात् कामिनीत्वादिसामान्येनोपस्थाप्यन्ते । ततश्च भावनावशेन स्वगतत्व-परगतत्वांशयोर्मोषाद्रतित्वमात्रपुरस्कारेण बोधो भवति । तैश्च साधारणीकृतैर्विभावादिभिस्तथाकृत एव स्थायी भुज्यते । भोगश्चानन्दात्मको रसपदव्यवहार्यः । एवञ्च प्रत्यक्ष एव रसः, सुखोपभोग इत्यादौ तथादर्शनात् । न च शब्दान्वयव्यतिरेकानुविधायितया तत्र शाब्दत्वमपीति वाच्यम्; सङ्करप्रसङ्गात्, शाब्दत्वप्रत्यक्षत्वयोर्युगपदनवस्थानादिति ।

अभिनवगुप्तपादादीनां मते सर्वं भट्टनायकवदेव, विशेषस्तु रससाक्षात्कारे 'दशमस्त्वमसि' इत्यादाविव प्रत्यक्षत्व-शाब्दत्वयोर्दर्शनादिन्द्रियसन्निकर्षादि-पदप्रत्यक्षादिसामग्रीद्वयजनिते एकस्मिन्नपि ज्ञाने शाब्दत्व-प्रत्यक्षत्वयोरविरोधाज्जाति-

साङ्कर्यस्य दोषानाधायकत्वात्, शाब्दत्व-प्रत्यक्षत्वयोर्जातित्वानङ्गीकाराद्वा एकत्र ज्ञाने द्वयोस्सत्त्वेऽपि न विरोधः। अत्र हि सामाजिकानामात्ममनःसंयोगादिसामग्र्यां सत्यामेव यथा रसप्रत्यक्षम्, एवं 'शून्यं वासगृहमि'त्यादिश्लोकार्थज्ञाने सत्येव, नान्यथा। अतः प्रत्यक्षकारणस्येव शाब्दबोधकारणस्यापि अन्वयव्यतिरेकौ स्त एव। तत्र शब्देन रसप्रतीतौ जननीयायां न शब्दगतोऽभिधा व्यापारः, तस्या वाच्यार्थबोधनमात्रेण विरतत्वाद्, विरम्य व्यापाराभावात्। नापि लक्षणा, मुख्यार्थबाधाद्यभावात्। मीमांसकाभिमततात्पर्याख्यवृत्तिस्तु पदार्थयोः संसर्गमात्रबोधने उपक्षीणा न रसबोधोपयोगिनी। अतो व्यक्तिर्नाम व्यञ्जनाव्यापारोऽभिनवगुप्तपादादिभिराश्रितः।

रसस्य प्रत्यक्षत्वमित्थम्—काव्यस्य निरन्तरालोचनेन नाट्यस्य सततदर्शनेन च सामाजिकानां प्रथमं 'रामः सीताविषयकरतिमानि'त्यादि-विशिष्टवैशिष्ट्यावगाहिज्ञानमेव जायते। तस्यैव च निरन्तराभ्यासदशायां सीताविषयकत्व-रामसमवेतत्वांशप्रमोषो भवति। ज्ञानाभ्यासे हि द्विविधमपि सम्भवनीयमस्ति, पूर्वपूर्वज्ञानविषयेण सहोत्तरज्ञानेऽधिकविषयत्वम्। यथा—व्युत्पित्सुदशायां पूर्वमेकैकं पदार्थं मनसि निधाय पश्चाद् द्वितीयादिपदार्थैः सह तान् चिन्तयन् व्युत्पित्सुः क्रमेण महावाक्यमपि एकस्मिन्नेव क्षणे जानाति। रसस्थले तु पूर्वं विशिष्टवैशिष्ट्यावगाहिज्ञाने सत्यपि तदीयैकैकांशप्रमोषेण रसज्ञानदशायामेकपदार्थमात्रं जानाति। यथा कीटभ्रमरस्थले ब्रह्मसाक्षात्कारे वा—कीटः प्रथमं भ्रमरो मामागत्य दङ्क्ष्यतीति जानन्नपि क्रमेणैकैकांशप्रमोषे भ्रमरमात्रं विषयीकुर्वन् स्वयं भ्रमररूपो भवति, एवं ब्रह्मज्ञोऽपि। इत्थञ्च रामत्व-सीताविषयकत्वाद्यंशप्रमोषे सति रतित्वेन ज्ञायमाना रतिः स्वात्मनि स्वरूपप्रत्यक्षेण रतिं विषयीकरोत्येव।

अयमेव साधारणीकरणात्मा व्यापार इत्युच्यते। 'अहं सीताविषयकरतिमान्' इति ज्ञानाकारे उच्यमाने सामाजिकानां व्रीडातङ्कादिः प्राप्नोति। 'रामः सीताविषयकरतिमानि'ति ज्ञाने तु परात्मसमवेतरत्यादीनामप्रत्यक्षतापातः, अत एवमुच्यते। एतादृशज्ञानोत्पत्तौ तु सत्त्वोद्रेको निमित्तम्। ततश्च व्यक्तिविशेषवृत्तित्व-व्यक्तिविशेषसमवेतत्वांशप्रमोषवती रतित्वेन ज्ञायमाना सत्त्वोद्रेकनिमित्ता रतिर्भीतिर्वेत्येवंरूपा वृत्तिः सत्त्वाधिक्यस्वभावात् सुखमेव जनयति। पुत्रमरणादीनां राज्यलाभादीनां वा स्वात्मगतत्वेन प्रतिसन्धीयमानानामेव दुःखादिहेतुत्वं लोके दृश्यते। अत आत्मगतत्वेन

ज्ञायमानानामेव तेषां शोकादिहेतुत्वं वाच्यम्। तच्चात्र नास्तीति न कोऽपि दोषः। अयमेव व्यक्तिवादः।

## विभावादीनां विचारः

काव्यगतैर्नाटकगतैर्वा विभावानुभावव्यभिचारिभिः रसिकगतस्थायिभावस्य संयोगाद्रसिकात्मनि रसनिष्पत्तिर्जायत इत्येव 'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरि'ति भरतसूत्रस्य तात्पर्यं सर्वैरालङ्कारिकैरङ्गीकृतम्। स्थायिभावा रसिकानाम्, विभावादयस्तु काव्यगता एव। तदुक्तं धनञ्जयेन—'वक्ष्यमाणस्वभावैर्विभावानुभावव्यभिचारिसात्त्विकैः काव्योपात्तैरभिनयोपदर्शितैर्वा श्रोतृप्रेक्षकाणामन्तर्विपरिवर्तमानो रत्यादिर्वक्ष्यमाणलक्षणः स्थायी स्वादगोचरतां निर्भरानन्दसंविदात्मतामानीयमानो रसः। तेन रसिकाः सामाजिकाः, काव्यं तु तथाविधानन्दसंविदुन्मीलनहेतुभावेन रसवत्, आयुर्घृतमित्यादिवत् व्यपदेशात्।' काव्यनाट्यश्रवणदर्शनजन्य आनन्द एव रसपदेनोच्यते। आनन्दहेतुत्वादायुर्घृतमितिवत् काव्यमपि रसवदुच्यत इति।

काव्यगतो रसः लौकिकरसः, रसिकगतोऽलौकिकरस इत्यभिनवगुप्त-धनञ्जय-रसगङ्गाधरकाराणां मतम्। लौकिकरसेषु काव्यगतनायकस्य चित्तवृत्तेरुद्दीपनाय यथा विभावादयोऽपेक्ष्यन्ते, स एव प्रकारो रसिकगतसुप्तभावानामभिव्यक्तये भवति। द्वयोरिदमेव तारतम्यं यत् काव्यगतनायकस्य विभावादयः प्रत्यक्षगोचरा अनलीकाश्च, रसिकस्य कल्पनानिर्मिताः साधारणीकृताश्च। तथा काव्यगतनायकः स्वकीयचित्तवृत्त्या स्वज्ञानेन परिमितमेव विचारं करोति। तदुक्तं साहित्यदर्पणे—

पारिमित्याल्लौकिकत्वात् सान्तरायतया तथा।
अनुकार्यस्य रत्यादेरुद्बोधो न रसो भवेत्॥ इति।

रसिकस्तु काव्यगतनायकस्य निखिलां सामग्रीं साधारणीकरणव्यापारेण ...न् कल्पनया निर्मितामन्यामपि स्वानुकूलां सामग्रीं गृह्णाति। अत एव सा परिमिता भवति। अत एव लौकिकरसेऽलौकिकरसे च महत्तारतम्यं भवति।

एवं सर्वेषु रसेषु विभावादयः काव्यगताः स्थायिभावाश्च रसिकगता इति नास्ति नियमः, बीभत्स-हास्यरसयोरन्यथादर्शनात्। तत्र बीभत्सरसस्योदाहरणम्—'उत्कृत्योत्कृत्य कृत्तिमि'त्यादि। अत्र पूतिगन्धं शवं भक्षयतः प्रेतान् दृष्ट्वा रसिकानां चेतसि

जुगुप्सास्थायिभावस्याभिव्यक्तिर्भवति । तथा च रसिकानां पूतिगन्धशवदर्शनमालम्बनविभावः, निष्ठीवन-वमनादयोऽनुभावाः, आवेगादयो व्यभिचारिणश्च जायन्ते । प्रेतरङ्काणां कृते तु आनन्दानुभूतिरेव । अत इदं ज्ञायते, यद् बीभत्सरसे विभावादयो रसिकस्यैव, न तु काव्यगतव्यक्तेः । एवं हास्यरसेऽपि—वीरमानी कश्चन पुरुषो निबिडान्धकारे रज्जौ सर्पभ्रान्तिं यदा करोति, तदोच्चैराक्रोशं कृत्वा परिहितं वस्त्रमपि परित्यज्य पलायितो भवति । एवंविधं वर्णनं श्रुत्वा रसिका हसन्ति । अत्र काव्यगतव्यक्तेः कृते भयानकरसस्य विभावादयो भवन्ति, सामाजिकस्य कृते हास्यरसस्य । अतः सिद्धमेतद् यद्धास्य-बीभत्सयोः रसिकस्यैव विभावादयः, न तु काव्यगतव्यक्तेः । सर्वमेतदालोच्य पण्डितराजेनोक्तम्—

"ननु रतिक्रोधोत्साहभयशोकनिर्वेदेषु प्रागुदाहृतेषु यथालम्बनाश्रययोः सम्प्रत्ययः, न तथा हासे जुगुप्सायां च; तत्रालम्बनस्यैव प्रतीतेः पद्यश्रोतुश्च रसास्वादाधिकरणत्वेन लौकिकहासजुगुप्साश्रयत्वानुपपत्तेरिति चेत् । सत्यम्; तदाश्रयस्य द्रष्टृपुरुषविशेषस्य तत्राक्षेप्यत्वात् । तदनाक्षेपे तु श्रोतुः स्वीयकान्तावर्णनपद्यादिव रसोद्बोधे बाधकाभावादि"ति ।

## रसानां संख्या

छान्दोग्येष्वेतानि वचनान्यवलोक्यन्ते—"एषां भूतानां पृथिवीरसः । पृथिव्या आपो रसः । अपामोषधयो रसः । ओषधीनां पुरुषो रसः । पुरुषस्य वाग् रसः । वाच ऋग् रसः । ऋचः साम रसः । साम्न उद्गीथो रसः । स एष रसानां रसतमः परमः पराध्र्योऽष्टमो यदुद्गीथः ।" उपरितनवाक्येषु उद्गीथः ( ॐ इति प्रणवाक्षरं ) अष्टमो रसः प्रतिपादितः । एवञ्चेयमेव संख्या भरतमुनिभिः रसविषयेऽङ्गीकृतेति संशीतिरुपजायते । तथैव बृहदारण्यकेषु विषयग्राहकाणामिन्द्रियाणामिन्द्रियग्राह्याणां विषयाणाञ्चाष्टैव संख्याः प्रतिपादिताः । पुरातनकाले श्रुतिवाक्येषु श्रद्धालुतया तत्प्रतिपादितसंख्यायामतिपावित्र्यं मत्वाऽग्रिमशास्त्रकारैः ता एव गृहीताः स्युरिति सम्भावयितुं शक्यते । चरकसंहितायामायुर्वेदीय-रससंख्याया विचारः कृतः । तत्र 'रसाहारविनिश्चये एक एव रसः' इति मतमारभ्य 'निमिः सप्तरसान् मनुते । वडिशः अष्ट, काङ्क्ययनः अनन्तान् ( अपरिमेया रसा इति ), पुनर्वसुः षड्रसान् मनुते' इत्यादि-

संख्या निर्णीताः। तत्र वडिशमतानुसारेणालङ्कारिकैः कदाचिदष्टसंख्या गृहीता स्यादित्यपि सम्भावयितुं शक्यते। आयुर्वेदे प्रोक्तानां षड्रसानामनुरोधेन केचिदालङ्कारिकाः षड्रसान् मन्वते। तत्र वचनम्—'षड्रसा इति रसज्ञा भिषजः, तदनुसारिणः केचिदलङ्कारमार्गगा अपि।'

अथर्ववेदाद्रसो गृहीत इति भरतेन नाट्यशास्त्रे स्वयमेवोक्तम्। तथा हि—

जग्राह पाठ्यमृग्वेदात् सामभ्यो गीतमेव च।
यजुर्वेदादभिनयान् रसानाथर्वणादपि॥ इति।

परन्तु अभिनवगुप्तकृतमस्य व्याख्यानं समालोक्य रसोऽथर्ववेदाद् गृहीत इति बुद्धौ न समारोहति। साहित्यशास्त्रेषु पारिभाषिको यो रसः स न केवलमथर्ववेदे, किन्तु कुत्रापि वेदेषु नास्तीति कथयितुं शक्यते। मन्ये 'पञ्चमो नाट्यवेदः' इतीमामुक्तिं समर्थयितुमर्थवादरीत्या पूर्वोक्तं सर्वमुच्यते। रामायण-महाभारतनिर्माणकाल एव काव्यरसाविष्कारकालः। तेषु ये रसास्त एव उत्तरोत्तरं निर्मितेषु काव्यनाटकादिष्ववलोक्यन्ते। महाभारतविषये उक्तम्—"इतिहासोत्तमादस्माज्जायन्ते कविबुद्धयः।"

(आ० २-३८५)।

सर्वेषां कविमुख्यानामुपजीव्यो भविष्यति।
पर्जन्य इव भूतानामक्षयो भारतद्रुमः॥ (आ० १-१३)।

पञ्च महाकाव्यानि तथा भास-कालिदास-भवभूतिप्रभृतीनां नाटकानि च रामायण-महाभारतान्तर्गतरसोत्कर्षप्रसङ्गानाश्रित्य रचितानि।

## भरतमुनेर्नाट्यशास्त्रे रसस्वरूपम्

भरतमुनिना चत्वारोऽभिनया अङ्गीकृताः। ते च सात्त्विकाङ्गिकाहार्यवाचिकाभिधानाः। एषां लक्षणानि विस्तरभयान्न लिख्यन्ते। भरतेन गुणालङ्कारादीनां रसोपकारित्वं प्रदर्श्य रसस्य प्राधान्यं दर्शितम्। तदुक्तम्—'नहि रसादृते कश्चिदर्थः प्रवर्तते' इति। नाटकानामङ्गोपाङ्गेष्वपि रसस्यैव मुख्यं स्थानं प्रदर्शितम्। तदुक्तम्—

रसा भावा ह्यभिनया धर्मिवृत्तिप्रवृत्तयः।
सिद्धिः स्वरास्तथा तोद्यं गानं रङ्गश्च संग्रहः॥ इति।

भरतानन्तरं रसविवेचनं काव्यं नाटकं चोद्दिश्य मुख्यतया जायते स्म। ध्वनि-

कारानन्तरं केवलं काव्यानुषङ्गेणैव रसविवेचनमभूत्। भोज-धनञ्जय-विद्यानाथ-हेम-चन्द्र-विश्वनाथातिरिक्तैः कैश्चिदपि साहित्यशास्त्रकारैर्नाट्यस्य विशदरूपेण विमर्श एव न कृतः।

## अलङ्कारमतम्

भरतानन्तरं किञ्चित्कालपर्यन्तं रसमतावरणकारि अलङ्कारमतं प्रवर्तितमभूत्। अस्य मतस्य प्रधानप्रवर्तको भामह एव। उद्भटः, दण्डी, रुद्रटश्चानुयायिनः। भामहस्य 'काव्यालङ्कार' नामको ग्रन्थो मुद्रितो वर्तते, यत्र षडध्यायाः सन्ति। सः शब्दार्थयोः काव्यत्वं मनुते। उक्तञ्च तेन—'शब्दार्थौ सहितौ काव्यम्' इति। काव्यनाटकयो-रुभयोरपि तेनोल्लेखः कृतः, परन्त्वलङ्काराणामेव प्राधान्यं प्रकटीकृतम्। स च शब्दार्था-लङ्कारयोरावश्यकतां वदति। तदुक्तम्—'शब्दाभिधेयालङ्कारभेदादिष्टद्वयं तु नः' इति।

अयमलङ्कारप्राधान्यमङ्गीकुर्वन्नपि रसं न विस्मृतवान्। यतो महाकाव्यलक्षणे तेनोक्तम्—'युक्तं लोकस्वभावेन रसैश्च सकलैः पृथक्' इति। एवं रसवत्प्रेयोर्जस्वि-प्रभृत्यलङ्कारेष्वपि तेन रससमावेशः कृतः। रसवदलङ्कारस्य तदुक्तलक्षणं यथा—'रसवद् दर्शितस्पष्टशृङ्गारादिरसं यथा' इति।

भामहात्पूर्वं कालिदासाश्वघोषादिकवयोऽभूवन्, तेषां काव्येषु भरतमुनिना समारब्धा रसपरम्पराऽवलोक्यते। दण्डी-भामह-वामनादिसाहित्यशास्त्रकाराणां रसविषये औदासीन्यं वर्तते। अत एतदनुमीयते यद् भरतमुनेर्नाट्यशास्त्रप्रादुर्भावान-न्तरं किञ्चित्कालपर्यन्तं रसपरम्परायास्तिरोधानमासीत्। आनन्दवर्धनाचार्यकालात् काव्येषु नाटकेषु च रससिद्धान्तः पुनः प्रावर्तत।

## दण्डिमतम्

इष्टार्थव्यवच्छिन्ना पदावलिः काव्यशरीरम्, तस्य शोभाकर्तारो धर्मा अलङ्काराः। तदुक्तम्—'काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते' इति। यद्यपि दण्डिना रीतेः प्राधान्यमङ्गीकृतम्, तथापि भामहापेक्षया रससत्तापि यत्र तत्र तेनाङ्गीकृता। गुणवर्णनप्रसङ्गे तेनोक्तम्—

मधुरं रसवद्वाचि वस्तुन्यपि रसस्थितिः।
येन माद्यन्ति धीमन्तः मधुनेव मधुव्रताः॥ इति।

सानुप्रासपदरचनास्वपि तेन रसवत्ताऽङ्गीकृता। तदुक्तम्—'पदासत्तिः सानुप्रासा रसावहा' इति। दण्डिनाऽप्यावपि रसा अङ्गीकृताः। तदुक्तम्—'इह त्वष्टरसायत्ता रसवत्ता स्मृता गिराम्' इति।

## वामनमतम्

वामनेन कान्तिनामकगुणेषु रससत्ताऽङ्गीकृता। यत्र शृङ्गारादयो रसा उत्कट-तया भासन्ते, स एव कान्तिगुणः। तदुक्तम्—'दीप्तरसत्वं कान्तिः' इति। अनित्ये-ष्वलङ्कारेषु रसमसमावेश्य गुणेषु रससमावेशं कृत्वा वामनेन पूर्वाचार्यपेक्षया रसस्य महत्त्वं प्रकटीकृतम्।

## रुद्रटमतम्

'शृङ्गारतिलक'नामको रुद्रटस्य ग्रन्थो वर्तते। तत्र तेन प्रोक्तं यद् भरतेन नाट्यमु-द्दिश्य यथा रसविवेचनं कृतं तथा मया काव्यमुद्दिश्य रसविवेचनं क्रियते। तदुक्तम्—

प्रायो नाट्यम्प्रति प्रोक्ता भरताद्यैः रसस्थितिः।
यथामति मयाप्येषा काव्यं प्रति निगद्यते॥ इति।

अस्य मते चन्द्रं विना निशेव रसं विना काव्यमरमणीयम्। तदुक्तं तेनैव—

यामिनीवेन्दुना मुक्ता नारीव रमणं विना।
लक्ष्मीरिव ऋते त्यागान्नो वाणी भाति नीरसा॥ इति।

## आनन्दवर्धनाचार्यमतम्

भामह-दण्डि-वामनादीनामलङ्कारशास्त्रकर्तॄणां समये भरतेन प्रकाशितं रसमतं किञ्चित्तिरोहितमासीत्। बहुकालमप्रधानभावेन स्थितो रस आनन्दवर्धनेन स्वकीय-ध्वन्यालोकग्रन्थे ध्वनिस्वरूपेण पुनः प्राधान्यमानीतः। ध्वन्यालोकस्यान्यद् महत्त्वमेतद् यदलङ्कार-रीति-गुण-दोषाणां भामहोक्ताया वक्रोक्तेः क्षेमेन्द्रकृतौचित्यादि-काव्यतत्त्वानां च ध्वनिषु योग्यतया समन्वयप्रदर्शनम्। गुणालङ्कारदोषादयः काव्यस्य बाह्याङ्गानि। आत्मतत्त्वस्य तथा रसिकचित्तवृत्तेरपि गम्भीरा विवेचनाऽद्यावधि नासीत्, सा च ध्वनिकारेणैव कृता।

## ध्वनिस्वरूपम्

काव्यस्य सारभूत आत्मा ध्वनिरेव। स च द्विविधः—वाच्यसहिष्णुः प्रतीय-

मानः, तथा वाच्यासहिष्णुः प्रतीयमानः। अयं हि स्त्रीणां हस्तपादाद्यवयवातिरिक्तं लावण्यमिव गुणरीत्यलङ्कारातिरिक्तो भासते। तदुक्तम्—

प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।
यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु॥ इति।

वाच्यार्थाद् भासमानोऽपि व्यङ्ग्योऽर्थो वाच्यातिरिक्त एव। अत एव क्वचिद् वाच्यो विधिरूपः, व्यङ्ग्यस्तु निषेधरूप एव। क्वचिद् वाच्यो निषेधरूपः, व्यङ्ग्यस्तु विधिरूपः। यस्मिन् काव्ये शब्दार्थयोरप्राधान्यं प्रतीयमानस्य च प्राधान्यं तद् ध्वनिकाव्यमुच्यते। तदुक्तम्—

यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः॥ इति।

स च त्रिविधः—वस्त्वलङ्काररसादिभेदात्। त्रिष्वपि रसध्वनिरेव प्रधानतमः, यतो हि वस्त्वलङ्कारयोः रसे एव पर्यवसानात्। तदुक्तम्—'तेन रस एव वस्तुत आत्मा, वस्त्वलङ्कारध्वनी तु सर्वथा रसं प्रति पर्यवस्येते इति वाच्यादुत्कृष्टौ तौ इत्यभिप्रायेण ध्वनिः काव्यस्यात्मेति सामान्येनोक्तम्' इति। गुणरीत्यलङ्कारादयः अङ्गानि, ध्वनिरेव मुख्य आत्मा। तदुक्तम्—'यतः काव्यविशेषोऽङ्गी ध्वनिरिति कथितः' इति।

तस्य पुनरङ्गानि—अलङ्कारा गुणा वृत्तयश्चेति। गुणानां रसवृत्तित्वमलङ्काराणां च शब्दार्थवृत्तित्वं तेनाङ्गीकृतम्। तदुक्तम्—

तमर्थमवलम्बन्ते येऽङ्गिनं ते गुणाः स्मृताः।
अङ्गाश्रितास्त्वलङ्काराः मन्तव्याः कटकादिवत्॥ इति।

यस्यालङ्कारस्य रसानुकूलता भवेत्, रसातिरिक्तः प्रयत्नो न भवेत्, स्वाभाविकरूपेण निष्पत्तिश्च भवेत्, ध्वनिमार्गे स एवालङ्कारपदेन गृह्यते। तदुक्तम्—

रसाक्षिप्ततया यस्य बन्धः शक्यक्रियो भवेत्।
अपृथग्यत्ननिर्वर्त्यः सोऽलङ्कारो ध्वनौ मतः॥

अस्येदमेव तात्पर्यं यद् मुख्यस्य रसस्योपयोगिता चेदङ्गतयाऽलङ्काराणां सन्निवेशः कार्यः, न मुख्यतया। प्रबन्धेष्वपि रसमभिलक्ष्यैव कथाभागः सन्निवेशनीयः,

विपरीतश्चेदन्यथा करणीयः। तदुक्तम्—'कविना प्रबन्धमुपनिवध्नता सर्वात्मना रसपरतन्त्रेण भवितव्यम्' इति।

## अग्निपुराणमतम्

केचिदग्निपुराणस्य पुराणत्वेन व्यासेन सह सम्बन्धं विधाय तस्य प्राचीनत्वं प्रामाण्यं चाङ्गीकुर्वन्ति। तन्नोचितं प्रतिभाति; यतो हि तत्र यद्यपि साहित्यशास्त्रस्य बहवो विषयाः प्रतिपादिताः, तथापि तत्र न केवलं भरतेनैव प्रतिपादितानां विषयाणाम्, अपि तु भामह-दण्डिप्रभृतिभिरपि प्रतिपादितानां विषयाणां सङ्कलनं दृश्यते। तथा हि—'यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ। व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः' इति ध्वन्यालोकस्थां कारिकामवलम्ब्यैवाग्निपुराणेऽधोलिखिताः श्लोका रचिता इति स्पष्टं प्रतीयते—

श्रुतेरलभ्यमानोऽर्थो यस्माद् भाति सचेतनः।
स आक्षेपो ध्वनिः स्याच्च ध्वनिना व्यज्यते यथा।
शब्देनार्थेन यत्रार्थः कृत्वा स्वमुपसर्जनम्॥ इति।

अग्निपुराणे रीतिरसालङ्कारादीनि सर्वाणि काव्यतत्त्वानि समभावेन प्रतिपादितानि, तथापि तस्य मुख्यं लक्ष्यं रस एव। तच्च 'वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम्' इत्यादि तदुक्त्या स्पष्टं प्रतीयते।

## भोजराजमतम्

भोजराजरचितं ग्रन्थद्वयमुपलभ्यते—'शृङ्गारप्रकाशः,' 'सरस्वतीकण्ठाभरणं' च। तत्र शृङ्गारप्रकाशस्य त्रयस्त्रिंशत्प्रकरणानि सन्ति। अस्मिन् साहित्यशास्त्रीयाणां सर्वेषां विषयाणां विस्तरेण वर्णनं कृतं नाट्यकाव्ययोश्च सर्वे विषया विस्तरेण प्रतिपादिताः। तत्र 'रसयोग'नामकैकादशे प्रकरणे रसविचारः कृतः, त्रयोदश-सप्तदशप्रकरणे च विभावादयः प्रतिपादिताः। सरस्वतीकण्ठाभरणस्य पञ्चमपरिच्छेदे रसविचारः कृतः।

भोजस्य रसविषये सर्वेभ्यो भिन्नैव कल्पना वर्तते। स चैकमेव शृङ्गारं रसं मनुते। शृङ्गारशब्दस्यार्थोऽभिमान एव। स च कथयति यद्यावधि महद्भिः सुप्रख्यैः साहित्यशास्त्रकारैर्दश रसाः स्वीकृताः। मया तु एक एवाङ्गीक्रियते। यथोक्तम्—'आम्नासिषुर्दश रसान् सुधियो वयं तु शृङ्गारमेव रसनाद्रसमामनामः' इति। रसविषये

भोजस्येदं कथनं वर्तते यदनुकूलावस्थायां विभावानुभावैर्मनसि योऽभिमानो जागति स एव रसः। रत्यादिस्थायिभावानां परिणामो रस इति तु वृथोक्तिः। तदुक्तं तेनैव—

अप्रातिकूलिकतया मनसो मुदादे-
र्यः संविदोऽनुभवहेतुरिहाभिमानः।
ज्ञेयो रसः स रसनीयतयात्मशक्तेः
रत्यादिभूमनि पुनर्वितथा रसोक्तिः॥ इति।

सरस्वतीकण्ठाभरणेऽप्येवमेवोक्तम्—'रसोऽभिमानोऽहङ्कारः शृङ्गार इति गीयते।' भोजस्य मते एकः शृङ्गारोऽथवा अभिमान एव रसपदवीं प्राप्नोति। अन्ये च ये व्यभिचारिभावाः स्थायिभावा वा ते सर्वे व्यभिचारिभावा एव। अस्य मतस्य विचारो यथावसरं करिष्यते। अनेन काव्यलक्षणे गुणालङ्कारनिर्दोषताभिः सहैव रसस्य समावेशः कृतः। तदुक्तम्—

निर्दोषं गुणवत्काव्यमलङ्कारैरलङ्कृतम्।
रसान्वितं कविः कुर्वन् कीर्तिं प्रीतिञ्च विन्दति॥ इति।

तथा भरतस्याष्टरसेषु शान्तप्रेयानुद्धतोदात्ताख्याश्चत्वारोऽधिका योजनीया इति सूचितम्।

## क्षेमेन्द्रमतम्

यथा बालकस्य यूनो वृद्धस्य वा यस्य कस्यचन कृते यदुचितं तदेव तस्य शोभाकरम्, तथैव काव्यनाट्ययोरपि तत्तदुचितसामग्रीसङ्घटनमेव जीवातुभूतम्। अयमेव विषय आनन्दवर्धनेन ध्वन्यालोके तृतीयोद्योते स्फुटीकृतः। यथा—

गुणानाश्रित्य तिष्ठन्ती माधुर्यादीन् व्यनक्ति सा।
रसान्, तन्नियमे हेतुरौचित्यं वक्तृवाच्ययोः॥
विषयाश्रयमप्यन्यदौचित्यं तां नियच्छति।
काव्यप्रभेदाश्रयतः स्थिता भेदवती हि सा॥
एतद् यथोक्तमौचित्यमेव तस्या नियामकम्।
सर्वत्र गद्यबन्धेऽपि छन्दोनियमवर्जिता॥
रसबन्धोक्तमौचित्यं भाति सर्वत्र संश्रिता।
रचना विषयापेक्षं तत्तु किञ्चिद्विभेदवत्॥ इति।

ध्वन्यालोकवृत्तावप्युक्तम्—

अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम् ।
प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत्परा ॥ इति ।

अयमेव सिद्धान्तः क्षेमेन्द्रेणाङ्गीकृतः, अतस्तत्र नावीन्यं नास्ति ।

इत्थं समासतः साहित्यशास्त्राचार्याणां रसविषयकाणि मतान्युपस्थापितानि । समेषामेतेषां पर्यालोचने कृते स्फुटं सिद्ध्यति यत्काव्ये नाट्ये च रस एव जीवातुभूतं तत्त्वमन्यानि च सर्वाण्यलङ्काररीत्यौचित्यादीनि तत्त्वानि रसाङ्गत्वेनैव ग्राह्याणि । एवं रसस्वरूपविचारेऽभिनवगुप्तपादानामेव मतं ज्याय इति । सोऽयं विचारो विस्तरशो यथावसरं प्रस्तोष्यत इति ।

———

# मानव-समुन्नतिक्रमः

श्रीअनन्तशास्त्री फड़के, पुराणेतिहासविभागाध्यक्षः, वा० स० वि० वि० वाराणसी ।

संप्रति समुपलभ्यमानसमुन्नतमानवसंस्कृतेर्विकासविषये विद्वत्सु प्रायः परस्पर-विरुद्धत्वेन भासमानं मतद्वयमुपलभ्यते ।

एकं मतमिदम्- मानवः कृते युगे परिपूर्णशक्तिः कामक्रोधलोभादिदोषरहितो बहुलानन्दः पापादिदोषरहितश्चासीत् । परन्तु केनचिदज्ञातेन कारणेन लोभादिवशः सन् क्रमेण ह्रियमाणशक्तिः सुखरहितः सम्पद्यते । तस्य कालस्य त्रेतेति नाम । तदैव प्रभृति प्रकृतितः स्वात्मानं स्वकीयाश्च रक्षितुम्, जीविकासम्पादनाय च क्रमेण प्रकृतिमनुभूयानुभूय अनेकशास्त्राणि मानवो निर्मितवान् ।

द्वितीयं मतमित्थमास्ते—प्रथमत एकपेश्यात्मको जीवन्प्राणी समुत्पद्यत । स च क्रमेण वर्धमानः सूक्ष्मकीटक-मत्स्य-कच्छप-मण्डूक-वराह-वानरादिद्वारा वनस्थ-मानवस्वरूपप्राप्त्यनन्तरं स्वात्मानं स्वकुटुम्बं च रक्षितुं प्रकृतिं दृष्ट्वा दृष्ट्वा तामनुभूयानु-भूय क्रमेण प्रस्तरमयानि शस्त्राणि पुनः कांस्यलोहमयानि शस्त्राणि च निर्माति स्म । एवं प्रथमतो निर्बलोऽपि प्राणी प्रकृतिद्वारा क्रमेण वर्धनशीलो मानवस्वरूपं प्राप्य स्व-प्रयत्नेन कृषि-स्थापत्य-वस्त्र-शस्त्रास्त्र-धर्म-राजनीत्यादिशास्त्राणि निर्माय सम्प्रति तु चन्द्रादिलोकं जिगमिषति । संभावयति चाधुनिको मानवः प्रायो वर्षद्वयाभ्यन्तरे चन्द्रा-दिलोकं गमिष्यामीति ।

अत्र प्रथमं मतं भारतीयानां पुराण-भारतादिग्रन्थेषु तथान्येषामपि बाइबिल-प्रभृतिधर्मग्रन्थेषु चोपलभ्यते । द्वितीयमतं च किञ्चिदंशेन द्वित्रपुराणेषु, क्वचिन्महाभारते, आधुनिकयुरोपादिदेशस्थवैज्ञानिकानां चास्ति । भारतीयानां पुराणग्रन्थेष्वपि द्वितीयमतं वायुपुराणे विशेषरूपेण ब्रह्माण्डे किञ्चिन्न्यूनांशेन विष्णुपुराणे च सर्वथा न्यूनांशेनोपलभ्यते । तेन वायुपुराणस्थश्लोकानां ब्रह्माण्ड-विष्णुपुराणयो-रुपलब्ध्या चानुमीयते—वायुपुराणीयमेवेदं मतं ब्रह्माण्डे ततो विष्णुपुराणे च सङ्कलितमिति ।

मानवविकासक्रमप्रदर्शनात्पूर्वं वायुपुराणीयं किञ्चिदैतिहासिकवृत्तनिवेदनं समुचितं प्रतिभाति, येन वायुपुराणगतस्ताद्दशांशः प्रक्षिप्तः, महापुराणेषु वायुपुराणं न गण्यते, वायुपुराणं सर्वथा नूतनमित्यादयः शङ्का विनश्येयुः।

विष्णु-पाद्म-मार्कण्डेय-कौर्म-वाराह-लिङ्ग-ब्रह्मवैवर्त-स्कन्दपुराणेषु वायुपुराणं शिवपुराणनाम्नोल्लिखितं दृश्यते। मत्स्य-नारद-देवीभागवतेषु वायुपुराणनाम्ना समुल्लेखोऽस्ति। अतोऽयं भ्रमो भवति केषाञ्चन—महापुराणेषु वायुपुराणं नास्ति, किन्तु शैवमेव महापुराणमिति। परन्तु वायुपुराणस्य रेवामाहात्म्ये प्रारम्भेऽन्ते च स्पष्टतया लिखितं यद् वायुपुराणस्यैव शिवमाहात्म्ययुक्तत्वाद् वायुना प्रोक्तत्वाच्च नामद्वयमिति। तथा हि—

चतुर्थं वायुना प्रोक्तं वायवीयमिति स्मृतम्।
शिवभक्तिसमायोगात् शैवं तच्चापराख्यया॥
पुराणं यन्मयोक्तं हि चतुर्थं वायुसंज्ञितम्।
चतुर्विंशतिसाहस्रं शिवमाहात्म्यसंयुतम्॥
यथा शिवस्तथा शैवं पुराणं वायुनोदितम्।
शिवभक्तिसमायोगान्नामद्वयविभूषितम्॥

अस्ति शिवपुराणमप्युपपुराणेषु परिगणितमेकं पुराणम्, तत्त्वन्यत्।

ईशवीयसप्तमशतकस्थितेन बाणेन हर्षचरिते कादम्बर्यां च वायुपुराणस्य स्पष्टतयोल्लेखः कृतः। "गमकैर्मधुरैराक्षिपन्मनांसि श्रोतॄणां गीत्या पवमानप्रोक्तं पुराणं पपाठ" (हर्ष० पृ० ८५-८६), "यत्र च महाभारते शकुनिवधः पुराणे वायुप्रलपितम्" (काद० पृ० ४१)। अतो बाणात्पूर्वं शतकद्वये वायुपुराणं प्रचलितमासीदिति निश्चयेन वक्तुं शक्यते।

किञ्च वायुपुराणीयभविष्यद्भागे गुप्तवंशीयनृपाणां विषये लिखितं यत् ते प्रयागं साकेतमनुगङ्गं मगदेशं चोपभोक्ष्यन्ते इति। यथा—

अनुगङ्गं प्रयागं च साकेतं मगधाँस्तथा।
एताञ्जनपदान्सर्वान् भोक्ष्यन्ते गुप्तवंशजाः॥

चतुर्थशतकस्थगुप्तवंशीयप्रमुखनृप-समुद्रगुप्तसमये गुप्तराज्यविस्तारोऽनुगङ्गादि-चतुर्देशापेक्षयानेकेषु प्रदेशेषु जात इत्यैतिहासिकाः प्रमाणयन्ति। एतेनैतत्कल्प्यते

यद् वायुपुराणीयभविष्यसङ्कलनसमये गुप्तानामधीनाश्चत्वार एव देशा आसन्। अतः समुद्रगुप्तसमयात्पूर्वं एकशतकमिते समये वायुपुराणं प्रसिद्ध्यति स्म। महाभारतस्यैक-लक्षात्मकस्य वर्तमानस्वरूपमीशवीयपञ्चाशद्वर्षेभ्यः पूर्वं समायातमिति कल्प्यते। तथा हि—ईशवीयपञ्चाशत्तमवर्षे पाण्ड्य-केरलादिदेशेषु समागतेन 'डायानकाय सोस्टोम'-संज्ञकेन ग्रीकदेशीययात्रिकेण लिखितं यद्भारतेऽप्येकलक्षात्मकं 'इलियड'सदृशं राष्ट्रिय-काव्यमस्तीति। तच्च राष्ट्रियमेकलक्षश्लोकात्मकं काव्यं भारतान्नान्यदिति प्रसिद्ध-मेव। पाण्ड्यकेरलदेशेषु प्रचारेण भारतं तदात्वे ततः शतकद्वयं प्राचीनं सिद्ध्यति। वायुपुराणमपि भूतभविष्यत्सहितं महाभारतादपि प्राचीनमिति निश्चीयते। यतो भारतीयवनपर्वणि भविष्यत्सहितं वायुपुराणं वर्णितमास्ते।

एतत्ते सर्वमाख्यातमतीतानागतं तथा।
वायुप्रोक्तमनुस्मृत्य पुराणमृषिसंस्तुतम्॥ (१६१,१६)

एतेन वायुपुराणं न नूतनं किन्तु सर्वेभ्यः प्राचीनमेवेति सिद्धम्। आस्तां तावत्, प्रकृतमनुसरामः।

त्रेतायुगस्य प्रारम्भे कृतयुगीयमानवानां कृते ये जीविकासाधनभूताः पदार्था आसन्, तेषु विनष्टेषु मेघेभ्यो वृष्टौ जातायां समुत्पन्नेभ्यो वृक्षादिभ्य एव त्रेतायुगीय-मानवानां जीविकाप्रभृतयो निर्वहन्ति स्म। वृष्ट्या भूमिसंयोगादुत्पन्नानां गृहत्वेन कल्पि-तानां वृक्षाणामधः स्थित्या जलवृष्टिग्रीष्मतापादीनां वारणम्, वृक्षोत्पन्नैः फलैर्भोजन-कार्यं बीजैरलङ्कारकृत्यं ततो जातैस्त्वगादिभिः प्रावरणं चाजायत। तदानीन्तनजनानां प्रारम्भिकमेतदलङ्करण-प्रावरण-गृह-वनस्पतिशास्त्रज्ञानम्[1]। पुनस्तासां प्रजानां प्रति-मासं गृहस्थधर्म-ग्राम्यधर्मसेवमानानां सन्ततिः पुत्रादिरूपा समवर्धत[2]।

तदात्वे सन्ततेर्बाहुल्यात्स्वकुटुम्बभरणलोभेन बलाद्वृक्षेभ्यः समेषां फलानां भक्षणेन, बीजानामलङ्करणेन, त्वचां प्रावरणेन गृहस्वरूपाः सर्वजीविकाप्रदातारो वृक्षा

१. सकृदेव तया वृष्ट्या संयुक्ते पृथिवीतले।
प्रादुरासंस्तदा तासां वृक्षास्तु गृहसंस्थिताः॥
सर्वः प्रत्युपभोगस्तु तासां तेभ्यः प्रजायते॥ ८,७८

२. तासांस्तत्कालभावित्वान्मासि मास्युपगच्छताम्।
अकाले ह्यार्तवोत्पत्तिर्गर्भोत्पत्तिरजायत॥ ८,८६

विनष्टाः[१]। तदा क्षुधावातातपवृष्टिशीतादिभिः पीडिताः सत्यः प्रजा वृक्षानितस्ततोऽन्वेषयन्त्यस्ततोऽन्यत्र पुनर्वृक्षान्प्रापुः। परन्तु तथैव रीत्या महति काले गते पुनरपि तथैव वृक्षनाशेन शीतवातादिपीडिताः कामक्रोधादिद्वन्द्वेन परस्परं पीडयन्त्यो यथाशक्ति यथायोग्यं यथाज्ञानं च मरुधन्वसु, निम्नस्थानेषु, पर्वतेषु, नदीषु च गृहरूपवृक्षशाखादीनां स्वरूपं स्मृत्वा स्मृत्वा ताः कथञ्चिन्निकेतनानि निरमापयन्[२]। एतत्तेषां प्राथमिकं वास्तुशास्त्रज्ञानम्। तदर्थं ताः स्वाङ्गुलान्येव प्रथमतः प्रमाणरूपेणागृह्णन्[३]। एतत्प्राथमिकं भूमापनशास्त्रज्ञानम्। एवं क्रमेण खेटग्रामपुरादीन् रचयामासुः। एतत् तासां ग्रामसमाजशास्त्रस्य प्राथमिकं ज्ञानम्। गृहनिर्माणात्पूर्वमावश्यकं शास्त्रादिज्ञानमङ्गीकरणीयमेव, नोचेद् गृहनिर्माणमशक्यम्।

एवं ताः शाखा दृष्ट्वा तदनुरूपाणि गृहाणि चक्रुः, नाम च तेषां गृहाणां शाखेत्येव प्रथमं कृतम्। परन्तु तत्र शाखानामभावात् शाखाशब्दगत'ख'स्थाने 'ल'वर्णं योजयित्वा गृहाणां शालेति नाम तेऽकुर्वन्[४]। इदं तेषां प्राथमिकव्याकरणनिरुक्तयोरूपम्। एवं सर्वस्मिन् कृतेऽपि तेषां जनानां वृक्षाधीनं सर्वं जीविकालङ्करणप्रावरणादिकमासीत्।

---

१. एवं विप्रतिपन्नेष्वप्रपन्नेषु परस्परम्।
तेन दोषेण तेषां ता ओषध्यो मिषतां गताः॥
प्रनष्टा ह्रियमाणा वै मुष्टिभ्यां सिकता यथा।
फलं गृह्णन्ति पुष्पैश्च पुष्पं पत्रैश्च ताः पुनः॥ ८,१४४

२. यथायोग्यं यथाप्रीति निकेतेष्ववसन् पुरा।
मरुधन्वसु निम्नेषु पर्वतेषु नदीषु च॥ ८,९७
यथा ते पूर्वमासन्वै वृक्षास्तु गृहसंस्थिताः।
तथा कर्तुं समारब्धाश्चिन्तयित्वा पुनः पुनः॥
बुद्ध्वाऽन्विष्यंस्तथा न्यायो वृक्षशाखा यथागताः।
...एवं प्रसिद्धाः शाखाभ्यः शालाश्चैव गृहाणि च॥ ८,१२६

३. चक्रुस्तदा यथाप्रज्ञं मित्वा मित्वाऽऽत्मनोऽङ्गुलैः।
मनोर्यानि प्रमाणानि तदा प्रभृति चक्रिरे॥ ८,१०१

४. एवं प्रसिद्धाः शाखाभ्यः शालाश्चैव गृहाणि च।
तस्मात्ता वै स्मृताः शालाः शालात्वं चैव तासु तत्॥ ८। १२६

## मानव–समुन्नतिक्रमः

कदाचन पूर्ववल्लोभादीनां प्राबल्येन परस्परविद्वेषेण च कल्पवृक्षेषु नष्टप्रायेषु क्षुधातृष्णाभ्यां पीडिता विषादव्याकुलास्तदनीन्तना जना आसन्। तदा दैवयोगेन जातवृष्ट्या अपां भूमेश्च संयोगाद् भूमिषु तासु ओषध्यश्चाभवन्। एवं तासामफालकृष्टाभिश्चतुर्दशग्राम्यारण्यौषधीभिर्जीविका प्राचलत्[1]। एवं कथंचित्प्रचलितायां जीविकायामेकदा भूमावोषध्यो न प्रादुरभवन्। बीजाभावाच्च नूतना अपि नासन्। तदा ता अतिपीडिता दुःखिताः सत्यो बुद्धिमन्तं नेतारं स्वयम्भुवं शरणं जग्मुः। तदानेन स्वयम्भुवा बीजप्राप्त्यर्थं मेरुं वत्सं कृत्वा पृथिवीतो ग्राम्यारण्यानां चतुर्दशौषधीनां दोहनं कृतम्[2]। (अर्थात् पूर्वं स्ववासस्थानमेरुपर्वताच्चतुर्दशौषधीनां बीजान्यानीय तेन स्वयम्भुवा तैर्बीजैः पृथिवी पुनरौषधीयुता सम्पादिता) परन्तु पुनरप्यफालकृष्टौषधीभिर्जीविकाकार्यं न सम्यक् प्राचलत्, तदा स्वयम्भूब्रह्मप्रवृत्ताभिः प्रजाभिः क्रियाजन्या कृषिः सम्पादिता। ततः प्रभृति कृष्टपच्या ओषध्यो जज्ञिरे[3]।

एतत्तदात्वे प्रारम्भिकं कर्मजं कृषिशास्त्रज्ञानम्। संसिद्धायां जीविकायां प्रजानां मध्ये रागद्वेषमूलकविरोधपरिहारार्थं स्वयम्भूः काञ्चित् धार्मिकीं मर्यादां स्थापयामास।

---

१. नष्टेषु मधुना सार्धं कल्पवृक्षेषु वै तदा।
विषादव्याकुलास्ता वै प्रजास्तृष्णाक्षुधात्मिकाः॥
वृष्ट्या तदभवत्स्रोतः खातानि निम्नगाः स्मृताः।
अपां भूमेश्च संयोगादोषध्यस्तासु चाभवन्॥ ८। १३१–१३२

२. ततस्तासु प्रनष्टासु विभ्रान्तास्ताः प्रजास्तदा।
स्वयंभुवं प्रभुं जग्मुः क्षुधाविष्टाः प्रजापतिम्॥
ब्रह्मा स्वयम्भूर्भगवान् ज्ञात्वा तासां मनीषितम्।
युक्तं प्रत्यक्षदृष्टेन दर्शनेन विचार्य च॥
कृत्वा वत्सं सुमेरुं तु दुदोह पृथिवीमिमाम्।
दुग्धेयं गौस्तदा तेन बीजानि पृथिवीतले॥ ८।१४६–१४६

३. यदा प्रसृष्टा ओषध्यो न प्ररोहन्ति ताः पुनः।
...ब्रह्मा स्वयम्भूर्भगवान् दृष्ट्वा सिद्धिं तु कर्मजाम्।
ततः प्रभृत्यथौषध्यः कृष्टपच्यास्तु जज्ञिरे॥ ८।१५६–१६०

तासु प्रजास्वन्येषां रक्षणकर्तॄन् क्षत्रियान् सत्यब्रह्म-वक्तॄन् ब्राह्मणान्, आलस्यरहितान् वैश्यकर्मप्रवृत्तान् वैश्यान्, परिचर्याप्रवीणान् शूद्रान् कल्पयामास[1]।

एवं कृतेऽपि वर्णधर्मस्थापने विशिष्टस्य कस्यचिन्नियमनस्याभावात्प्रजाः पुनर्मोहाद् वर्णधर्मानुल्लङ्घ्य परस्परं व्यरुध्यन्त। ततः स्वयम्भूर्ब्रह्मा याथातथ्येन सर्वं ज्ञात्वा क्षत्रियेभ्यो बलं युद्धादिकं ब्राह्मणेभ्यो याजनाध्यापनादिकं वैश्येभ्यो वाणिज्य-पाशुपाल्यादिकं शूद्रेभ्यः शिल्पभृत्यादिकं च समादिशत् (८।१६६-१७२)। अतः कालात् प्रभृति जन्मतो जातिव्यवस्था समपद्यत। पुनर्लोभादिना वर्णधर्मोल्लङ्घनेन वर्णानां परस्परसङ्घर्षनिवारणार्थं स्वस्वकर्मकर्तॄणां कृते लोकान्तरेषु प्राजापत्यादीनि स्थानानि स्वयम्भूर्निर्ममे[2]। अनन्तरं ब्रह्मा प्रजासु बलधर्म-यज्ञव्रततपोमोक्षादि-प्रवृत्त्यर्थमाश्रमान्ब्रह्मचर्यादीन्, तद्योग्यधर्मान्, यमान्, नियमान्, शास्त्राणि च स्थापयामास[3]।

एवं त्रेतामुखे तदानीन्तनैरनेककष्टाननुभूयानुभूय क्रमशो वर्धिता भारतीय-शास्त्रादिभिः पल्लविता यज्ञपरोपकारविरोधहिंसादिनिवृत्तिरूपपुष्पिता, प्राणिमात्रस्य कृते सुखरूपफलसन्नद्धा मोक्षदायिनी भारतीयसंस्कृतिरद्य यावत्तथैव कथञ्चित्प्रवर्तते।

—

१. संसिद्धायां तु वार्तायां ततस्तासां स्वयम्भुवा।
मर्यादाः स्थापयामास यथारब्धाः परस्परम्॥
इतरेषां कृतत्राणाः स्थापयामास क्षत्रियान्।
सत्यं ब्रह्म यथाभूतं ब्रुवन्तो ब्राह्मणाश्च ते।
वैश्यानेव तु तानाहुः कीनाशान् वृत्तिसाधकान्॥
...परिचर्यासु ये रताः। ...शूद्रांस्तानब्रवीत्तु सः॥८।१६२-१६५

२. लोकान्तरेषु स्थानानि तेषां सिद्ध्याऽददात् प्रभुः।
प्राजापत्यं ब्राह्मणानां...स्थानमैन्द्रं क्षत्रियाणाम्...।
वैश्यानां मारुतस्थानं...गान्धर्वं शूद्रजातीनाम्॥ ८ १७३-१७५

३. ब्रह्मा तान् स्थापयामास आश्रमान्नामनामतः।
निर्देशार्थं ततस्तेषां ब्रह्म धर्मानभाषत।
प्रस्थानानि च तेषां वै यमांश्च नियमांश्च ह॥ ८।१७८

# काशीस्थमानमन्दिरवेधालयीय-यन्त्राणि

श्रीविभूतिभूषणभट्टाचार्यः, वा० सं० वि० वि० वाराणसी ।

अम्बरपतिना महाराजेन सवाईजयसिंहेन १७८१ वैक्रमीये वर्षे तदनुसारं १६४६ शकवर्षे, तदासन्ने वा काले इन्द्रप्रस्थे, जयपुरे, उज्जयिन्याम्, वाराणस्याम्, मथुरायाञ्च स्थापितानां वेधालयानां भारतीयज्यौतिषशास्त्रेतिहासे वैशिष्ट्यमस्ति। १७८१ वैक्रमीयसंवत्सरात् पूर्वं रचितेषु ज्यौतिषशास्त्रीयग्रन्थेषूपलभ्यमानानां गणितोपकरणानामुपलब्धिः केषां यन्त्राणां साहाय्येनाभूदिति तत्तद्ग्रन्थेषु नोपलभ्यते, न वा तत्र सामान्यवर्णनादृते किञ्चिदप्युपलभ्यते प्राचीनानां यन्त्राणां मानादिविषये।

कालक्रमाच्च प्राचीनैरेभिरुपकरणैरानीतग्रह-वास्तवग्रहयोरन्तरमापतितं दृष्ट्वा सवाईजयसिंहेन महाराजेन गणितागतग्रह-वास्तवग्रहयोरैक्यसाधनार्थं वेधेन गणितोपकरणानां शुद्धिं विधातुमुल्लिखितेषु स्थानेषु वेधालयानां स्थापना कृता। वेधेन गणितोपकरणानां शोधनकर्मणि सवाईजयसिंहमहाराजस्य मुख्यसहायको जगन्नाथनामा कश्चित् पण्डित आसीत्। तेन हि स्वरचिते 'सम्राट्सिद्धान्त'-नामके ग्रन्थे एवमुक्तम्—

"स धर्मपालो गणितप्रवीणान् ज्योतिर्विदो गोलविचारदक्षान्।
कारूँस्तथाहूय चकार वेधं गोलादियन्त्रैर्युसदाश्च भानाम् ॥ ८॥
तेन श्रीजयसिंहेन प्रार्थितः शास्त्रसंविदा।
करोति श्रीजगन्नाथः सम्राट्सिद्धान्तमुत्तमम् ॥ ६ ॥

पुष्पवतोर्ग्रहयो उदयास्तयोर्ग्रहस्य स्पष्टीकरणे चान्तरं दृष्टं तदा यन्त्ररचना कृता, इन्द्रप्रस्थे अवन्त्यां तथा काश्यां मथुरायां सवाईजयपुरे च सर्वत्र यन्त्ररचना कृता।"
—सम्राट्सिद्धान्तः, ( हस्तलिखिता प्रतिः )।

इदमत्रावधातव्यं यत् सवाईजयसिंहेन तत्र तत्र यानि यन्त्राणि स्थापितानि, तानि तु आरबीयज्यौतिषिकयन्त्राणां प्रतिसंस्करणमात्राण्येव सन्ति। सम्राट्सिद्धान्तकर्त्तुः पण्डितप्रवरस्य जगन्नाथस्य सवाईजयसिंहस्य च आरबीयज्यौतिषे

ग्रीक-ज्यौतिषे च परमा श्रद्धा आसीदिति सम्राट्सिद्धान्तादिदर्शनेन स्फुटीभवति। यन्त्ररचनेतिहासमाख्यातुकामेन जगन्नाथेन तु स्वीये ग्रन्थे कथितम्—

"पूर्वं प्राचीनमिजस्तिकर्त्रा मतलमजूषेण यन्त्रैर्ग्रहनक्षत्रवेधं कृत्वा निश्चयः कृतः। तदनन्तरं समरकन्दनगरे उलूकवेग-नाम्ना यन्त्रैर्ग्रहनक्षत्रवेधं कृत्वा निश्चयः कृतः। ततो वर्षशतत्रयानन्तरं श्रीमहाराजाधिराज-जयसिंहप्रभुवर्याणामाज्ञया यन्त्ररचना जाता।"

अत्र मिजस्तिशब्देन अल्मजिस्तसंज्ञकं Syntaxis नामधेयं ग्रन्थमेवाभिप्रेतं जगन्नाथस्येति बोद्धव्यम्। तत्-कर्त्ता च मतलमजूष-शब्देन Ptolemy संज्ञकः ग्रीसदेशीयाचार्यो लक्षितोऽवगन्तव्यः।

यद्यपि श्रीमता जी० आर० के० महोदयेन स्वीये वेधालयवर्णनात्मके पुस्तके सम्राट्सिद्धान्तनामकस्य ग्रन्थस्य तावद् अल्मजिस्तसंज्ञकपुस्तकस्य Ptolemy कृतस्य भाषान्तरमात्रत्वं ख्यापितम्, परन्तु सम्राट्सिद्धान्तपर्यालोचकानां मते तत्रारवीय-ग्रीस-ज्यौतिषशास्त्रसिद्धान्तवर्णने सत्यपि नेदं भाषान्तरमात्रमल्मजिस्तग्रन्थस्येति निश्चितम्। यतो जगन्नाथेन तु तत्रैवोक्तम्—

"एवं सत्यपि लोकव्यवहारार्थं प्राचीनोक्ता मध्यमक्रिया प्रोच्यते। अथ च तेषु वीजं दत्त्वा फलसंस्कारेण यथा दृक्तुल्यतां यान्ति तथा अत्र ग्रहाः साधिताः।"

अनेन ग्रन्थांशेन सम्राट्सिद्धान्तस्य 'के०' महोदयेन ख्यापितं भाषान्तरमात्रत्वं कपोलकल्पितमात्रमिति सुस्पष्टम्।

सम्राट्सिद्धान्तकर्त्रा जगन्नाथेन तु अनेकेषां वेधालयानां स्थापने हेतुरपि तत्रैवोक्तः—"यदा इन्द्रप्रस्थेऽभ्रं जातं तस्मिन् दिने सवाईजयपुरे वेधो दृष्टः। सवाईजयपुरे यदा अभ्रादिकं जातं तस्मिन् दिने इन्द्रप्रस्थे वेधः कृतो दृष्टश्च। एवमवन्त्यां मथुरायां काश्याञ्च सर्वत्र निश्चयः कृतः। एवं प्रकारैर्ग्रहशोधने देशाधिपेन राज्ञा देशे देशे यन्त्ररचनां कृत्वा निश्चयः कार्यं इति।"

गणितोपकरणानां शुद्ध्यर्थं जयसिंहेन न केवलं वेधालया एव स्थापिताः, परन्त्वक्षांशादीनामपि याथार्थ्यनिर्धारणार्थं तेन 'महम्मदसरीफ'नामा कश्चन यवनः फिरङ्गादिदेशेषु प्रेषित आसीत्। तदीयं विदेशगमनवृत्तान्तं तावज्जगन्नाथेन सम्राट्सिद्धान्ते एवमुपवर्णितम्—

"अन्यच्च फिरङ्गदेशे श्रीमहाराजाधिराजैर्महम्मदसरीफनामा यवनः प्रेषितः स्थितः। तेन महैलदेवद्वीपं गत्वा अक्षांशाः ४/१२ निश्चिताः। ते दक्षिणाः। दक्षिणदेशे यत्राग्रे दक्षिणध्रुव उन्नतो दृष्टः, तत्रत्यानां तारकाणामाकृतीर्दृष्ट्वा शुद्धाः कृत्वा आनीताः। तेषां ध्रुवकाः शराः क्रान्तिधय्यो वा देश (?) देशीया मध्यनतांशाश्च दृष्टाः।" अयन्तु महैलदेवद्वीपः इदानीं मालद्वीपेति प्रसिद्धो न वेति विचारणीयः प्रेक्षावताम्।

एतस्मिंश्चावसरे काशीस्थे वेधालये स्थापितानां यन्त्राणामेवोपवर्णनं विधास्यते। यद्यपि म० म० बापूदेवशास्त्रिप्रभृतिभिरनेकैः प्राच्यैः पाश्चात्यैर्वा विद्वद्भिः काशीस्थमानमन्दिराभिधवेधालयस्य वर्णनं कृतम्, तथापि सम्राट्-सिद्धान्तमनुसृत्यैवेदानीं तत्तद्-यन्त्राणां स्वरूपं तैस्तैर्यन्त्रैर्वेधोपायश्च प्रदर्शयिष्यते।

अयं हि वेधालयो वाराणस्यां गङ्गायाः पश्चिमे तटे दशाश्वमेधघट्टसन्निधौ मानमन्दिराभिधे स्थाने अम्बरपतिना महाराजेन मानसिंहेन स्थापितातिथिशालायामुपरि तले महाराजेन जयसिंहेन १७८६ वि० सं०=१६५१ शकाब्दे तदासन्ने वा काले प्रतिष्ठापितोऽभूदिति पूर्वमेवोक्तम् (चित्रम् १, २, ३, ४)। अस्मिंश्च वेधालये पूर्वं यावन्ति यन्त्राणि स्थापितान्यासन् तावन्तीदानीं नोपलभ्यन्त इति म० म० बापूदेवशास्त्रिमहोदयानां लेखतः सुस्पष्टमेव। निबन्धेऽस्मिन् वर्तमानानां यन्त्राणामेव स्वरूपादिकमालोचयिष्यते।

इदानीमस्मिन् वेधालये सम्राट्यन्त्रद्वयम्, दिगंशयन्त्रमेकम्, नाडीवलययन्त्रमेकम्, चक्रयन्त्रमेकम्, दक्षिणोदग्भित्तियन्त्रद्वयं च वर्त्तन्ते। प्राचीनेषु वर्णनेषु केवलमेकस्य नाडीवलययन्त्रस्योल्लेखो दृश्यते, परन्त्विदानीं तस्य चिह्नमपि न दृश्यते।

तत्र प्रथमं तावन्नाडीवलययन्त्रस्वरूपं सम्राट्सिद्धान्ततः समुद्धृत्य प्रदर्श्यते।

"अभीष्टदेशे काष्ठमयं पलभाक्षेत्रद्वयं विधायाभीष्टसमान्तरेण पूर्वापररेखायां कर्मकारहस्तमितां पीठिकां कृत्वा तदुपर्युभयतः पलभाक्षेत्रद्वयं स्थापयेत्। तत्कर्ण-समानभूमिकायां यथा तत्पालितगतदृष्ट्या वेधसौकर्यं स्यात् तथा वृत्तं कार्यम्। तन्नाडीवलयं भवति। तत्केन्द्रमवश्यं ध्रुवाभिमुखं भवति।

पुनः पलभाद्वयं दूरीकृत्य सुधया श्लक्ष्णं विधाय भांशाङ्कितं षष्टिघट्यङ्कितञ्च

कार्यम्। यथा भागचतुष्टयं सम्भवति तथा पूर्वापरसूत्राङ्कितम्, ऊर्ध्वाधरसूत्राङ्कितञ्च कार्यम्।

तत्केन्द्रे सूत्रं निधाय केनचिदाधारेण ध्रुवाभिमुखं स्थिरं कृत्वा ततस्तत्पालिगतपट्टिकया सूत्रगतदृष्ट्या ग्रहर्क्षादिकं वेध्यम्। ऊर्ध्वस्थानाद् वेधस्थानान्तं नतकालो ज्ञेयः।

अस्मिन् उत्तरगोलस्थानां ग्रहर्क्षाणां वेधो भवति। दक्षिणगोलस्थानां न भवति तेनेदं नादृतम्।"

अस्य स्वरूपादिकन्तु पञ्च-षट्संख्याकयोश्चित्रयोर्दर्शनेन स्फुटं भविष्यति।

इदानीं दिगंशयन्त्रस्वरूपमुपवर्ण्यते—

"अथ दिगंशज्ञानार्थं दिगंशयन्त्रमुच्यते। तन्निर्माणप्रकारो यथा—जलवत् समीकृतायां भूमौ दिक्साधनं कृत्वा वृत्तं इष्टव्यासार्द्धेन कार्यम्। तस्य क्षितिजमिति संज्ञा। एवं क्षितिजत्रयं कार्यम्।

तत्र प्रथमं वृत्तं इष्टोच्चप्रमाणं पूर्णगर्भं कार्यम्।

द्वितीयवृत्तोपरि वर्त्तुला चक्राकारा प्रथमोच्छ्रायप्रमाणा भित्तिः कार्या।

तृतीयवृत्तोपरि द्विगुणोच्छ्रायतुल्या वर्त्तुला पालिः कार्या।

क्षितिजत्रयेऽपि पूर्वापरा याम्योत्तरा च रेखा कार्या।

तदुपरि भांशाः चक्रकलांशाश्चाङ्क्याः।

तृतीयवृत्ते चतुःसूत्री पूर्वोक्तवद् दृढा कार्या।

प्रथमवृत्ते केन्द्रस्थाने एकं सूत्राग्रं दृढं संलग्नं कार्यम्।

द्वितीयसूत्राग्रं पाषाणेन बध्वा तृतीयवृत्तपालौ स्थाप्यम्। तस्य दृङ्मण्डलसूत्रमिति संज्ञास्ति।

अथ वेधप्रकारः—इष्टग्रहस्य नक्षत्रस्य वा बिम्बं केन्द्रद्वितीयमण्डलगतदृष्ट्या चतुःसूत्रीकेन्द्रमार्गेण दृङ्मण्डलसूत्रे यथा भवति तथा दृङ्मण्डलसूत्रं तृतीयपालौ प्रचालनीयम्। एवं कृते सति पूर्वापररेखासूत्रचिह्नाद् दृङ्मण्डलसूत्रपर्यन्तं क्षितिजे दिगंशा भवन्ति।

× × ×

अनेन यन्त्रेण यन्त्रसम्राजा च चन्द्रध्रुवकज्ञानञ्च भवति।" (पत्र—३-४)। अस्य यन्त्रस्य स्वरूपादिकं ७ सङ्ख्यके चित्रे द्रष्टव्यम्।

अथेदानीं दक्षिणोदग्भित्तियन्त्रं वर्ण्यते।

"अथ दक्षिणोदग्भित्तिसंज्ञं यन्त्रमुच्यते—समकोण-सम-चतुर्भुजां भित्तिं दक्षिणोदक्स्थां विधाय दक्षिणोदक्स्थोर्ध्वकोणे केन्द्रं कृत्वा भित्तिप्रमाणव्यासार्धेन वृत्ततुर्यांशप्रमाणं क्षेत्रं कार्यम्। तत्र नवत्यंशाः कार्याः, यथासम्भवं कलाश्चाङ्क्याः। केन्द्रेऽभीष्टं लोहशङ्कुं निधाय मध्याह्ने रवेश्छाया वेध्या। अधःसूत्रवृत्तसाम्याचिह्नात् छायाग्रपर्यन्तं नतांशा बोध्याः।

एवं प्रत्यहं वेधेन परमाधिकता परमाल्पता च नतांशानां ज्ञेये।

दक्षिणस्थपरमाधिकपरमाल्पनतांशान्तरार्धं परमक्रान्तिर्भवति। इदं परक्रान्त्यधिकाक्षदेशे भवति।

यत्र च उत्तरनतांशाः परमाल्पा भवन्ति तत्र वृत्तं किञ्चिद् दक्षिणतोऽधिकं कार्यम्। तत्र परमाधिकपरमाल्पनतांशयोगार्द्धं परमक्रान्तिर्भवति।

अक्षांशाधिकक्रान्तिदेशे परमक्रान्तिः परमाल्पनतांशैर्हीना अक्षांशा भवन्ति। क्रान्त्यधिकाक्षदेशे तु परक्रान्तिः परमनतांशैर्युता अक्षांशा भवन्ति। (अस्य यन्त्रस्य स्वरूपादिकं ८-९ सङ्ख्यकयोश्चित्रयोर्द्रष्टव्यम्)।

इदानीं जयसिंहाज्ञया कृतानां वेधानां फलादिकं किञ्चिद् वर्ण्यते।

"अनेन यन्त्रेण इन्द्रप्रस्थेऽक्षांशाः २८।३९ ज्ञाताः। परमक्रान्तिश्च २३।२८, यवनदेशे अबरखासादिभिर्यवनाचार्यैर्वेधेनोपलब्धा क्रान्तिः २३।५१।१९, पुनर्यूनानदेशे षट्त्रिंशदक्षांशयुते बतूलमजूषेण वेधेन प्राप्ता क्रान्तिः २३।५१।१५।

पुनः समरकन्दनगरेऽक्षांशैः ३९।३७ युते उलूकवेगेन वेधेनोपलब्धा क्रान्तिः २३।३०।१७।

अस्माभिः शालिवाहनशके १६५१ इन्द्रप्रस्थेऽनेन यन्त्रेण वेधेन प्राप्ता क्रान्तिः २३।२८।"

अत्र इन्द्रप्रस्थः = दिल्ली, यवनदेशः = ग्रीसदेशः, यूनानदेशः = ग्रीसदेशः (आयोनिया-संज्ञकः); समरकन्दः = समरखन्द इति बोद्धव्यः।

एवमेव अबरखास: = Hipparchus = Aberkas; बतलमजूष: = Ptolemy; Chaudivs; उलूकदेश: = Ulaghbeg संज्ञको गणितज्ञो बोद्धव्य: ।

अत: परं यन्त्रसम्राडाख्यं यन्त्रमुपवर्ण्यते—"जलसमीकृतायां भूमौ दिक्साधनं कृत्वा याम्योत्तररेखा कार्या । तस्यां भित्तिर्जात्यक्षेत्रसदृशी उदग्ध्रुवाभिमुखी यथा ध्रुवसूत्रं तद्भित्तौ पतति तथा कार्या । कर्णाकारभित्त्यर्धे पूर्वपश्चिमान्यतरपालौ केन्द्रं कृत्वा पूर्वापरोर्ध्वचन्द्रलेखासदृश एव वृत्तचतुर्थांश: कार्य: । इदमर्धवृत्तं चतुरङ्गुल-पिण्डयुतं हस्तमितपरिणाहं कृत्वा तत्पालि: पाषाणचूर्णादिना श्लक्ष्णा दृढा कार्या । अस्यां पञ्चदशघटिका यथासम्भवं पलानि चाङ्क्यानि । भित्तौ ध्रुवाभिमुख: सोपानमार्ग: कार्य: । इदमपि नाडीवलयमित्युच्यते ।

अत्र भित्त्युभयपालौ केन्द्राद् याम्योत्तरत: त्रिज्यात्रिभागतुल्या: षष्ठिभागा अङ्क्या: ।

पुनर्वेधार्थं वृत्तपालिसकलसदृशी पट्टिका वृत्तपालिसंलग्ना यथा भवति तथा कार्या । तस्यां निखात्वा मध्यदीर्घसुषिरयुता द्व्यङ्गुला लोहपट्टी दृढा कार्या । इयं वेध-पट्टी भवति ।" (पत्र० ६-७) ।

अथानेन प्रकारेण वेधप्रकारस्तु तत्रैव—"पट्टिकां वृत्तपालौ निधाय लोहपट्टी सुषिरगतदृष्ट्या भित्तिपालिसंलग्नया ग्रहर्क्षादिकं वेधयेत् । तदा अन्येन सोपान-मार्गमारुह्य भित्तौ पट्टिकादि निधाय चिह्नं कार्यम् । तच्चिह्नकेन्द्रचिह्नान्तरेंऽशादिकं ग्राह्यम् । तस्य छायासारण्यां चापमंशादिकं ग्राह्यम् । सा वेधितग्रहर्क्षाणां क्रान्ति-र्भवति । भित्तिमूलाद् वेधस्थानपर्यन्तं नतकालो ज्ञेय: ।" ( पत्र-७ ) । अस्य यन्त्रस्य स्वरूपप्रत्ययार्थं १०-११ सङ्ख्यके चित्रे द्रष्टव्ये ।

अनन्तरं चक्रयन्त्रस्य विवरणन्तु सरस्वतीभवनस्थे सिद्धान्तसम्राट्-नामके जगन्नाथरचिते ग्रन्थे नोपलब्धमस्माभिरिति म० म० बापूदेवशास्त्रिमहोदय-रचितात् "मानमन्दिराभिधवेधालयवर्णन"मिति नामकाद् ग्रन्थात् समुद्धृत्य दर्श्यते ।

"भित्तिद्वयमध्यवर्त्तिलोहमयं चलमण्डलं ब्राह्मपालौ पित्तलपत्रेणावृतं ध्रुवा-भिमुखव्यासकमङ्गुलत्रयविस्तारमर्द्धाङ्गुलपिण्डं पार्श्वयोर्भांशै: प्रत्यंशं तुल्यैश्चतुर्भि-र्विभागैश्चाङ्कितं केन्द्रस्थकीले प्रोतया अङ्गुलत्रयविस्तारया मध्यचिह्नितसूत्रया पित्तलपत्र्या विशिष्टं चक्रयन्त्रं नाम ।"

अस्य यन्त्रस्य वर्तमानं स्वरूपं १२ सङ्ख्यके चित्रे द्रष्टव्यम् ।

यद्यपि यन्त्रमेतद् वर्णयद्भिः श्रीमद्भिः शास्त्रिवर्यैरुक्तम्—"अत्रैव यन्त्रे ग्रह-नक्षत्राणां नतकालाद्यवगमाय आधारवृत्तादीनि अन्यान्यपि वलयान्यासन् । परमिदानीं तानि नष्टानीति भाति" इति; तज्जयपुरस्थ वेधालये स्थापितस्य चक्रयन्त्रस्य वर्णनानुसारं न सदिति प्रतिभाति । जयपुरस्थे चक्रयन्त्रे तथाविधानामाधारवृत्तादीनामसत्त्वादिति मन्तव्यम् ।

इदानीं दिगंशयन्त्रस्य पश्चिमोत्तरदिशि वर्त्तमानस्यैकस्य सन्देहास्पदस्य यन्त्रस्य यन्त्रांशस्य वा स्वरूपं १३ सङ्ख्यके चित्रे द्रष्टव्यम् ।

यद्यपि केनाप्यस्यार्थक्रियाकारित्वमवलम्ब्य निर्णयात्मकं किमपि न लिखितं तथाप्यस्य स्वरूपादिदर्शनेन नेदं यन्त्रं किन्तु यन्त्रनिर्माणोपकरणभूतमिदमित्येवास्माकं प्रतिभाति ।

यथा च यन्त्रनिर्माणार्थं कर्कटक-लम्बकप्रभृतीनां यन्त्रोपकरणानां भवति प्रयोजनीयत्वम्, तथैव भूमेर्जलसमीकरणार्थं किञ्चिदुपकरणमप्यावश्यकं ज्यौतिषिक-यन्त्रनिर्माण इति तु आर्यभटादिभिरुक्तम् ।

तादृशोपकरणस्य तु स्वरूपमेतत्सदृशमेवेति मन्तव्यम् । सम्भाव्यते चास्य वेधालयस्य स्थापनावसरे जलसमीकृतभूमिलाभार्थं १३ सङ्ख्यकचित्रोल्लिखितोपकरणस्यासीदुपयोगित्वमिति ।





चित्रम्—१
वाराणस्यां गङ्गायाः पश्चिमे तटे मानसिंहेन प्रतिष्ठापिता
तिथिशाला, यत्रोपरितले जयसिंहेन वेधालयः प्रतिष्ठापितः



चित्रम्—२
वेधालयस्य प्रवेश-द्वारम् ( इदानीन्तनम् )




चित्रम्—३
वेधालयस्य प्रवेशद्वारतोऽदूरे इदानीं स्थापितं प्रस्तरफलकोपरि स्थापयितुर्नामादिकम्



चित्रम्—४
वेधालयस्य बाह्यं स्वरूपम् ( प्रवेशद्वारतः )



चित्रम्—५
नाडीवलययन्त्रम् ( उत्तराभिमुखो भागः )



चित्रम्—६
नाडीवलययन्त्रम् ( दक्षिणाभिमुखो भागः )



चित्रम् — ७
दिगंशयन्त्रम्



चित्रम् — ८
दक्षिणोत्तरभित्तियन्त्रम्



चित्रम् — ९
दक्षिणोदग्भित्तियन्त्रम्



चित्रम् — १०
सम्राट्-यन्त्रम् ( यन्त्रसम्राट् वा )



चित्रम् – ११
सम्राट् यन्त्रम् ( लघुतरम् )



चित्रम्—१२
चक्रयन्त्रम् ( पामरैर्दर्शकैः वेधनलिका वक्रीकृता )



चित्रम्—१३
भूमेर्जलसमीकरणयन्त्रम् ( ईषत् खण्डितम् )

# धर्मतत्त्व-विमर्शः

श्रीप्रेमवल्लभत्रिपाठी, धर्मशास्त्राध्यापकः, वा० सं० वि० वि० वाराणसी।

धर्मादेव प्रयुक्तादभिदधति सतां धर्मकामार्थमोक्षान्
नान्यार्थौ काममोक्षौ धनमबहुफलं शेषवर्गान्वितं च।
इत्थं सिद्धान्तकारैर्धृतिकृदयमतः सेव्यते सावधानै-
रादावेतन्निबध्नन् विषयफलयुतं शास्त्रमाविश्चकार॥

'धर्मो विश्वस्य जगतः प्रतिष्ठा, लोके धर्मिष्ठं प्रजा उपसर्पन्ति धर्मेण पापमपनुदति, धर्मे सर्वं प्रतिष्ठितम्, तस्माद् धर्मं परमं वदन्ति' इति वेदार्थमुपबृंहयन्तो भगवत्पूज्यपादाः श्रीशङ्कराचार्याः श्रीमद्भगवद्गीतायां भाष्योपक्रमावसरे "स भगवान् सृष्ट्वेदं जगत्तस्य च स्थितिं चिकीर्षुः मरीच्यादीनग्रे सृष्ट्वा प्रजापतीन् प्रवृत्तिलक्षणं धर्मं ग्राहयामास वेदोक्तम्। ततोऽन्यांश्च सनकादीनुत्पाद्य निवृत्तिलक्षणं धर्मं ज्ञानवैराग्यलक्षणं ग्राहयामास। द्विविधो हि वेदोक्तो धर्मः—प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च जगतः स्थितिकारणम्। प्राणिनां साक्षादभ्युदयनिःश्रेयसहेतुर्यः स धर्मो ब्राह्मणाद्यैर्वर्णिभिराश्रमिभिश्च श्रेयोऽर्थिभिरनुष्ठीयमाणो दीर्घेण कालेन अनुष्ठातॄणां कामोद्भवाद्धीयमानविवेकविज्ञानहेतुकेनाधर्मेण अभिभूयमाने धर्मे प्रवर्धमाने चाधर्मे, जगतः स्थितिं परिपिपालयिषुः स आदिकर्ता नारायणाख्यो विष्णुर्भौमस्य ब्रह्मणो ब्राह्मणत्वस्य संरक्षणार्थं देवक्यां वसुदेवादंशेन कृष्णः किल सम्बभूव" इति स्वल्पकैरेवाक्षरैर्धर्मस्य स्वरूपम्, सर्वातिशायिनीं प्रयोजकताम्, परब्रह्मणोऽनुग्राह्यत्वञ्चोपपादितवन्तः। अतश्चतुर्विधेषु पुरुषार्थेषु मानव-जीवनं सफलयितुं सर्वतो महत्त्वपूर्णो मुख्यः पुरुषार्थो धर्म एव। एवञ्च ईश्वरस्य या शक्तिः समस्तं जगद्धारयति, यस्मिंश्च सर्वं धारयितुं शक्तिरस्ति, स धर्मपदवाच्यः। यतो हि "धारणाद् धर्ममित्याहुर्धर्मो धारयते प्रजाः" इति। प्राणिनां सुखदुःखयोरिष्टानिष्टयोश्च प्राप्तिपरिहारयोराधारो धर्म एव। यद्यपि "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इत्यनुसारमनन्तानन्तशक्तीनां पारावार ईश्वरः कर्तुमकर्तुमन्यथा-

कर्तुं समर्थः, तथापि सोऽपि कस्मैचिदपि प्राणिनेऽणुमात्रमपि सुखादि प्रदातु स्वयं न प्रभवति ऋते धर्माधर्माभ्याम्। अतः सुखादिप्रदाने ईश्वरस्य केवलं नियन्तृत्वमेवावशिष्यते। किम्बहुना, ईश्वरस्य वैषम्यनैघृ ण्यादिदोषापहारको धर्म एव। इत्थञ्च यदि मम प्रागल्भ्यं न मन्येरन्, तदा एतावद् वक्तुं प्रभवामि यदीश्वरोऽपि धर्मस्य कृतज्ञतां बिभर्तीति।

जैन-सम्प्रदायाचार्यैः श्रीसोमदेवसूरिभिरपि धर्माधर्मरूपस्याद्दष्टस्य माहात्म्यविषये उक्तम्—"इह किमपि हि नास्ति तद्वस्तु यत्रानैश्वर्यमद्दष्टाधिष्ठात्र्याः" इत्यादि। अत्र नञ्द्वयेन आचार्येणाद्दष्टस्य कियद् दार्ढ्यं प्रकटितम्! श्रुति-स्मृति-सम्प्रदायाचार्याणां वचनेष्वेव धर्मस्य न माहात्म्यम्, अपि तु अर्थशास्त्राचार्याणां महर्षिगुरु-शुक्र-चाणक्यादीनां वचनेष्वपि। महर्षिश्चाणक्योऽपि 'अर्थशास्त्रमित्यस्य "मनुष्याणां वृत्तिरर्थः, मनुष्यवती भूमिरित्यर्थः, तस्याः पृथिव्या लाभपालनोपायप्रवर्तकं शास्त्रमर्थशास्त्रम्" इति व्युत्पत्तिं प्रदर्शयन् तत्र प्राणिमात्रस्य सुखोपायानुपदिशन्नन्ते 'सुखस्य मूलं धर्मः' इति सतोषं ब्रवीति।

इमानेवार्थान् 'धनानि स्नौति धर्मो हि धारणाद्वेति निश्चयः' इति महाभारतशान्तिपर्वोक्तं वचनम्, 'वृषो हि भगवान् धर्मः' इति आर्षोक्तिः, 'यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः' इति काणादं सूत्रञ्च प्रतिपादयन्ति।

बृहदारण्यकेन (१।४) तु धर्मस्य माहात्म्यविषये शब्दसङ्कोचं परिहरता सविशेषं प्रत्यपादि—"ब्रह्म वा इदमग्र आसीदेकमेव। तदेकं सन्न व्यभवत्। तच्छ्रेयोरूपमत्यसृजत क्षत्रम्, यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति।···स नैव व्यभवत्, स विशमसृजत, यान्येतानि देवजातानि गणश आख्यायन्ते वसवो रुद्रा आदित्या विश्वेदेवा मरुत इति। स नैव व्यभवत्, स शौद्रं वर्णमसृजत, पूषणमियं वै पूषेयं हीदं सर्वं पुष्यति, यदिदं किञ्च। स नैव व्यभवत्, तच्छ्रेयोरूपमत्यसृजत धर्मं तदेतत् क्षत्रस्य क्षत्रं यद्धर्मस्तस्माद्धर्मात्परं नास्त्यथो अबलीयान् बलीयांसमाशंसते धर्मेण, यथा राज्ञैवं यो वै सः धर्मः" इति। अर्थात् परमात्मा आदौ क्रमशः सर्वाः प्रजाः सृष्ट्वा बलीयसाऽबलं पीडितं दृष्ट्वा प्रवृद्धं मात्स्यन्यायमवरोद्धुं क्षत्रियमसृजत्। ततोऽपि बलीयसा जगच्छासकेन क्षत्रियेण यथेच्छाचारेण पुनरपि प्रजाः पीड्यमाना विलोक्य जगच्छासकं क्षत्रियं नियन्त्रयितु धर्मतत्त्वमसृजत्। अनेन

धर्मस्य सर्वातिशायिप्राण्युपकारकत्वं सुप्रतीयते । इदमेव तथ्यमस्य भाष्यं कुर्वता भगवता श्रीशङ्कराचार्येण "क्षत्रस्य क्षत्रं क्षत्रियस्यापि नियन्तृ, उग्रादप्युग्रं यो धर्मस्तस्माच्छत्रियस्यापि नियन्तृत्वाद् धर्मात्परं नास्ति। तेन हि नियम्यन्ते सर्वे" इति प्रत्यपादि। अस्या उपनिषदोऽन्त्यांशस्यैव निर्गलितमर्थं महाभारतमित्थ मभिधत्ते—

न राज्यं नैव राजासीत् न दण्डो नैव दाण्डिकः।
धर्मेणैव प्रजाः सर्वाः रक्षन्ते स्म परस्परम्॥ इति।

पूर्वस्मिन्काले सत्यप्रधाने सत्ययुगे धर्मेण पालिताः प्रजा आसन्। धर्मे सर्वेषां मनसः प्रवृत्तिरासीत्, अधर्मे च कस्यापि प्रवृत्तिर्नाभवत्। धन-विद्यादीनामुपार्जनं धर्मेणैवासीत्। एतादृश्यामवस्थायां कस्यापि नियामकस्य का नामावश्यकता ? किन्तु ततो यथा यथा धर्मस्य ह्रासः प्रारभ्यत, तथा तथा प्रत्यावर्त्य अधर्मस्यान्यायस्य च वृद्धिरपि प्रादुरभवत्। अत एव सर्वाः प्रजाः कुपथात्सत्पथे प्रवर्तयितुं चराचरं जगन्मर्यादयितुं च लोकनियामकस्य राज्ञो राज्यस्य चावश्यकता समापतिता। तदारभ्य धर्मरक्षार्थमेव राज्ञो निर्वाचनमारब्धम्। धर्मरक्षार्थमेव राज्ञो निर्वाचनमपेक्षत इति महाभारते महाराजं युधिष्ठिरं प्रति भीष्मपितामहेनोक्तम्—

धर्माय राजा भवति न कामकरणाय तु।
मान्धातरिति जानीहि राजा लोकस्य रक्षिता॥

अतो धर्मरक्षक एव शासको वस्तुतः प्रजानां रक्षणं कर्तुं समर्थः।

धर्मस्य ह्रासवृद्ध्योरनेकानि कारणानि सन्ति, किन्तु तेष्वन्यतमं कारणं राजा। अतो यदि राजा धर्मपरायणः स्यात्तदा सर्वाः प्रजा धर्मपरायणा भवन्ति। स यदि धर्मविमुखः स्यात्तर्हि सर्वा अपि प्रजा धर्मविमुखा भवन्ति—

राज्ञि धर्मिणि धर्मिष्ठाः पापे पापाः समाः समे।
राजानमनुवर्तन्ते यथा राजा तथा प्रजाः॥
कृतं त्रेता द्वापरश्च कलिश्च भरतर्षभ।
राजवृत्तानि सर्वाणि राजैव युगमुच्यते॥

(म० भा० शा० प०)

राजदण्डभयाल्लोकः स्वस्वधर्मपरो भवेत्।
यो हि स्वधर्मनिरतः स तेजस्वी भवेदिह॥

(शुक्रनीति, १।२३)

अत एव सोमदेवसूरिभिरप्युक्तम्—'अधर्मपरे राज्ञि को नाम धर्मविमुखो न स्यादि'ति। राज्ञि अधर्मपरायणे धर्मरक्षार्थमसमर्थे सति वा स्वयं भगवानेव तद्रक्षणार्थं तत्संस्थापनार्थं चावतरतीति तु स्वयमेव भगवानाह—

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्॥ इति।

अतोऽपि धर्मस्य माहात्म्यम्, प्रयोजकत्वं च सर्वातिशायीति समर्थयितुं शक्यते। अत एव मनुना मुख्यतया धर्मसंरक्षणमेव राज्ञः परमो धर्म इत्युपदिष्टम्—

कार्यं सोऽवेक्ष्य शक्तिं च देशकालौ च तत्त्वतः।
कुरुते धर्मसिद्ध्यर्थं विश्वरूपं पुनः पुनः॥ इति।

अतो राज्ञो धर्मस्य च परस्परं सापेक्षतया राजनीतिधर्मयोर्माहात्म्यमुपवर्णयन् कश्चिदाह—"नीतिर्लक्ष्मीः समाख्याता धर्मो नारायणः स्मृतः" इति।

अत एव स्वधर्मविमुखः पिता, आचार्यः, सुहृत्, माता, स्त्री, पुत्रादिः सर्वोऽपि राज्ञा वारणीयो दण्डनीयश्चेति मनु-शुक्रावाहतुः—

नादण्ड्यो नाम राज्ञोऽस्ति यः स्वधर्मे न तिष्ठति।
सुदण्डैर्धर्मनिरताः प्रजाः कुर्यान्महाभयैः।
नृपः स्वधर्मनिरतो भूत्वा तेजःक्षयोऽन्यथा॥ इति।

धर्मरक्षिते भारत एव एतादृशमुदाहरणं दृश्यते यत् पितरि दिवङ्गते राज्याधिकारी ज्येष्ठः पुत्रः स्वकनिष्ठं भ्रातरम्, तत्रापि विमातृजं राज्येन संयोक्तुं कामयते, कनिष्ठश्च धर्मादनपेतं ज्येष्ठं भ्रातरं राज्येन संयोक्तुं कामयते। इतिहासपरिशीलनशीलानां नाविदितमेतद् यद्राज्यस्य कृते पितुः, पुत्रस्य, भ्रातॄणाञ्च का का दशापरासु जातिषु जाता।

स च धर्मो द्विप्रकारकः—(१) सिद्धरूपः, (२) साध्यरूपश्च। तत्राद्यः स्वयं परिपूर्णः। क्रियान्तरनिरपेक्षो यः स सिद्धधर्मः। एतदनुसारं पूर्णं परब्रह्म परमात्मैव

सिद्धधर्मः। यथोक्तम्—'रामो विग्रहवान् धर्मः', 'कृष्णं धर्मं सनातनम्' इति। एवंविधसिद्धधर्मरूप-परमतत्त्वस्य साक्षात्काराय साक्षात् परम्परया वा यन्मुख्यं साधनं स साध्यधर्मः। अयञ्च यज्ञ-दान-तपःक्रियादिभिः सदाचरणैश्च सिद्ध्यति। देशकालवर्णाश्रमाधिकारिणां विभिन्नभावनानां फलानुसारं साध्यधर्मस्य प्रभूततरा भेदा भवन्ति। अस्य च साकल्येन विवेचनं पूर्वमीमांसायां द्वादशसु अध्यायेषु भगवता जैमिनिना विहितम्।

सिद्धधर्मे किमपि वक्तव्यं नास्ति। केवलं तस्य विज्ञानेन, साक्षात्कारेणैव जीवानां निःश्रेयसरूपं कल्याणं सम्पद्यते। अस्य च सिद्धधर्मस्य साक्षात्करणाय सकलेषु शास्त्रेषु द्वे एव प्रक्रिये स्तः। एका वेदान्ताद्यध्यात्मप्रधान-दर्शनशास्त्राध्ययनं तदर्थविवेचनादिश्च, अपरा भगवदनुरागरूपा भक्तिस्तदुपयोगिभगवत्कथा-श्रवणादि-सत्कर्मानुष्ठानादिश्च।

अपरस्य साध्यधर्मस्याप्यनुष्ठानं सकाम-निष्कामभावेन द्विविधम्। निष्काम-भावेन कृतं धर्मानुष्ठानं साध्यधर्मकल्पमेव। किन्तु सकामभावेन विहितं धर्मानुष्ठानं सदोषं भवति। यद्यपि धर्मस्तु सदैव स्वभावतोऽत्यन्तनिर्मलः, तथापि तदुपासकस्य, तदनुष्ठातुर्दुर्भावनादिदोषदूषितमनस्कत्वान् निर्मलोऽपि धर्मः समलो भवति। तच्च मलं तत्तत्फलकामनारूपम्। तदुक्तं महाभारते—'अपध्यानमलो धर्मः मलोऽर्थस्य निगूहनम्' इति। अत एव सकामभावनयाऽनुष्ठितो धर्मस्तदनुष्ठातारं तदभीष्टवस्तुप्राप्तिं संसाध्य तत्रैव विरमति। अर्थात् सकामभावेनाचरितो धर्मो धर्मार्थकामरूपं फलं दत्त्वा तत्रैव क्षीणो भवति, अनुष्ठातारं मोक्षरूपं चतुर्थं परमपुरुषार्थं न प्रापयति। इदमेव धर्मस्य समलत्वम्। निर्मलो धर्मः—निष्कामभावनयाऽनुष्ठितो धर्मः—त्वनुष्ठातारं चरमं पुरुषार्थं मोक्षरूपं भगवत्तत्त्वं प्रापयति। तदुक्तं श्रीमद्भागवते—

धर्म आचरितः पुंसां वाङ्मनःकायकर्मभिः।
लोकान् विशोकान् वितरत्यथानन्त्यमसङ्गिनाम्॥ इति।

अत एव भगवता गीतायां निष्कामकर्मयोगस्य महत्त्वमभीक्ष्णश उक्तम्। यत्र साध्यरूपो धर्मो विफलतामुपयाति, तत्र सिद्धरूपो धर्मस्त्राणाय कल्याणाय च कल्प्यते। दुःशासनेनाभिभूता द्रौपदी यदा क्रमशो युधिष्ठिरादीन् पञ्चापि पतीन् संप्रार्थ्य 'धर्मेण

वद्धोऽस्मि, द्यूतेन जितोऽस्मीति प्रकारैर्नष्टाशा विवशा च सञ्जाता तदा सिद्धधर्मं परमात्मानं सस्मार, त्राणं चाविन्दत।

अयमर्थो न केवलं परलोकदृशामध्यात्मैकपक्षपातिनां सम्मतः, किन्तु सर्वेऽपि राजनीतिविचक्षणा मनु-गुरु-शुक्रादयः प्राचीनाः, कौटिल्य-कामन्दक-सोमदेवप्रभृतयोऽर्वाचीनाश्च आचार्याः सकलपुरुषार्थेषु धर्मस्यैव सर्वातिशायि महत्त्वमङ्गीकुर्वन्ति। यथा—

सुखार्थाः सर्वभूतानां मताः सर्वाः प्रवृत्तयः।
सुखं च न विना धर्मात्तस्माद्धर्मपरो भवेत्॥
नामुत्र हि सहायार्थं पिता माता च तिष्ठतः।
न पुत्रदारा न ज्ञातिर्धर्मस्तिष्ठति केवलः॥
तस्माद्धर्मं सहायार्थं नित्यं सञ्चिनुयाच्छनैः।
परलोकसहायार्थं वल्मीकमिव पुत्रिकाः॥ इति।

मानव-जन्मनि धर्मानुष्ठानस्यैव मुख्यत्वं कथयता श्रीसूरिसोमदेवेनोक्तम्—"सहसम्भवोऽपि देहो नामुत्र सहानुयायी, किं पुनरन्यः ?" इति।

इत्थञ्च धर्मस्य माहात्म्यम्, क्षेत्रम्, परिभाषा, लक्षणञ्च प्रचुरतराणि। विभिन्नेषु देशेषु, विभिन्नासु जातिषु, विभिन्नेषु तत्तद्धर्मग्रन्थेषु च विभिन्नं विभिन्नं धर्मलक्षणम्। किन्तु सर्वेषु लक्षणेषु एकमेव तत्त्वं निहितं वर्तते। सामञ्जस्यदृष्ट्या तदेवं वक्तुं शक्यते यद् येन कर्तव्येन यया भावनया, येन व्यवहारेण वा स्वस्य स्वात्मीयस्य च कुटुम्बिनः, प्रतिवेशिनः, मण्डलस्य, राष्ट्रस्य, लोकस्य, परलोकस्य च अर्थात् सर्वेषां स्थावर-जङ्गमानां कल्याणं भवेत्तत्सर्वं धर्मपदवाच्यम्। कर्तव्य-विचारस्य भावनायाश्च प्रादुर्भावस्थानमन्तःकरणं चेतो वा। अतो धर्मस्य नियन्तृभिराचार्यैः शास्त्रैश्चान्तरं मलं प्रक्षालयितुं तत्तद्विधानमुपदिष्टम्। तेषां तेषामुपायानां च विधिमुखेन निषेधमुखेन च निर्देशः कृतः। एवञ्च धर्मो भागद्वये विभक्तः—एकः सामान्यधर्मोऽपरो विशेषधर्म इति।

तत्र सामान्यधर्मः सत्यादिस्त्रिंशत्प्रकारकः श्रीमद्भागवते निरूपितः। यथा—

सत्यं दया तपः शौचं तितिक्षेक्षा शमो दमः।
अहिंसा ब्रह्मचर्यं च त्यागः स्वाध्याय आर्जवम्॥

सन्तोषः समदृक् सेवा ग्राम्येहोपरमः शनैः ।
नृणां विपर्ययेहेक्षा मौनमात्मविमर्शनम् ।।
अन्नाद्यादेः संविभागो भूतेभ्यश्च यथार्हतः ।
तेष्वात्मदेवताबुद्धिः सुतरां नृषु पाण्डव ।।
श्रवणं कीर्तनं चास्य स्मरणं महतां गतेः ।
सेवेज्यावनतिर्दास्यं सख्यमात्मसमर्पणम् ।।
नृणामयं परो धर्मः सर्वेषां समुदाहृतः ।
त्रिंशल्लक्षणवान् राजन् सर्वात्मा येन तुष्यति ।।
(भागवत, ७।११।८-१२)

तत्र सामान्यधर्मः सर्वजातिषु, सर्वदेशेषु, सर्वराष्ट्रेषु, सर्वसम्प्रदायेषु च समान एव । नेदृशः कोऽपि देशः सम्प्रदायो वा, यत्र चौर्यमसत्यमिन्द्रियलौल्यं वा कर्तव्यकोटौ परिगणितम्, न वैतेषां कृते प्रोत्साहनमेव विहितम् ।

विशेषधर्मे तु देश-काल-जाति-सम्प्रदायानुसारेण बहूनि विभिन्नप्रकाराणि स्रोतांसि निःसृतानि । तत्र हेतुः—तत्तद्विशेषदर्शनसिद्धान्तेनाध्यात्मिकपारमार्थिक-तत्त्वस्य निरूपणात् तदधिगन्तुं भिन्नभिन्नप्रकारेण भिन्नभिन्नोपायानामुपन्यसनमेव । सिद्धान्ततो विषयप्रतिपादनप्रकारे परमार्थतत्त्वनिरूपणे पद्धतिभेदेन न्यूनाधिकरूपेण भेदे सत्यपि मूलतः सर्वेषां धर्माणां चित्तशुद्धिद्वारा सर्वतोभावेन सर्वकल्याणमेव प्रधानं लक्ष्यम् । उपाये वैमत्येऽपि उपेतव्ये कथमपि सादृश्ये सर्वधर्माणां समादरः कर्तव्यः । कथञ्चिदनेनैव हेतुना 'स्वधर्मे निधनं श्रेयः परधर्मो भयावहः' इति भगवता कथितं स्यात् । अत एवार्यधर्मेषु कदाचिदपि बलादन्येषां धर्मपरिवर्तनं श्रेयस्करं न गणितम् । यदि कश्चित् स्वधर्मपरिवर्तनं स्वेच्छया करोति, तदाऽपि स्वधर्मे तस्य स्वीकरण-मार्यधर्मे न क्रियते, यथा स्वेच्छया परेच्छया वा परधनस्य स्वीकरणं चौर्यं मन्यते । मन्ये, इदमेवात्र तथ्यं यद्यथा त्वदीयो धर्मः परमार्थपरस्तथैव ममापि; अत एकस्य परित्यागेऽपरस्य संग्रहणे लोभो न कार्यः। इत्थं स्वीकरणास्वीकरणयोरुभयोरपि हानिर्न सम्पद्येत । एवञ्च चित्तशुद्धिप्रकारेषु विशेष-धर्मेषु उपासनाविशेषेण भेदः संलक्ष्यते ।

तत्र केचन धर्मविशेषाः सदैव प्रवृत्तिपराः, केचन सदैव निवृत्तिपराः, केचन

चोभयपराः। तत्र शास्त्राणामिदमभिमतं यत्पूर्वं प्रवृत्तिपरो भूत्वा पश्चान्निवृत्तिपरे धर्मे प्रयतितव्यमिति। यथोक्तं भागवते—

वृत्त्या स्वभावकृतया वर्तमानः स्वकर्मकृत्।
हित्वा स्वभावजं कर्म शनैर्निर्गुणतामियात्॥
(भागवत ७।११।३२)

इदमेवाभिप्रेत्योक्तं श्रीसोमदेवसूरिणा—"यः कामार्थावुपहत्य धर्ममेवोपास्ते स पक्वं क्षेत्रं परित्यज्योषरं कर्षतीति'।

धर्मानुष्ठानाय त्याग-सन्तोष-सदाचार-संयमादीनां महत्यावश्यकता भवति। वस्तुतोऽन्तःकरणस्य सत्पथे प्रवर्तनमेव धर्मानुष्ठानमार्गः, यतोऽन्तःकरणशुद्धिं विना विहितमपि धर्माचरणमकिञ्चित्करमेव भवति। तदुक्तं भगवता मनुना—

वेदास्त्यागाश्च यज्ञाश्च नियमाश्च तपांसि च।
न विप्रदुष्टभावस्य सिद्धिं गच्छन्ति कर्हिचित्॥ इति।

एतदभिप्रायानुसारेणैव 'धर्मार्जनस्य के उपायाः?' इति वर्णनप्रसङ्गे श्रीसोमदेवसूरिणाऽप्युक्तम्—"आत्मवत्परत्र कुशलचिन्तनम्, शक्तितस्त्यागतपसी च धर्माधिगमोपायाः। अत एव रागद्वेषादिदोषदूषितान्तःकरणानां न काऽपि शुभक्रिया शुभदा भवति। न खलु भूतद्रुहां कापि क्रिया प्रसूते श्रेयांसि परत्रेह च, यतो हि हस्तिस्नानमिव विफलं सर्वमनुष्ठानमनियतेन्द्रियमनोवृत्तीनाम्" इति। अतो धर्माचरणायान्तःकरणशुद्धिरपेक्षिता। अन्तःकरणस्य शुद्ध्यर्थं चार्थकामयोरनासक्तिरपेक्षिता भवति। अत एव मनुनोक्तम्—"अर्थकामेष्वसक्तानां धर्मज्ञानं विधीयते" इति। अस्थिरमनसः खल्वेष स्वभावो यत्सद्यःसुखकरेषु सुखाभासेषु वा विषयेषु निरुद्धमपि तदनायासेन धावति, किन्तु शतशश्चोद्यमानमपि कल्याणकरे वर्त्मनि न प्रवर्तते। एतदेवोक्तं श्रीसूरि-सोमदेवेन - "मति-नदी सर्वेषां प्राणिनामुभयतो वहति, पापाय धर्माय च। तत्राद्यं स्रोतोऽतीव सुलभम्, दुर्लभं तु द्वितीयमि"ति।

अत्रेदमपि विवेचनं नासङ्गतं भविष्यति यद्धर्मस्य यद्येतादृशं माहात्म्यम्, यदि नाम स ऐहिक-पारलौकिक-सर्वविधसौख्यसम्पादकः, तर्हि लोके एतद्विपरीतं कथं दृश्यते? यो ह्यधर्मनिरतो जनो लोको देशो राष्ट्रं वा, स सर्वथा समृद्धः परिपूर्णो जित-

शत्रुर्विश्रुतकीर्तिः पुण्ययशलोकश्च दृश्यते। अन्यो हि संयमपरो धर्मनिरतः सर्वथैव दीनो हीन उपेक्षितः कष्टभाक् च दृश्यते। अतश्च स यदि दानादिकर्तुमसमर्थो दरिद्रः कष्टेन कुटुम्बभरणपरस्तदा क्व तस्य सङ्ग-सङ्गतिकरणकथा, क्व च शुभावहपरलोकवाद इत्याधुनिकशङ्काप्रसरः।

किन्त्वियं शङ्का नाधुनिकी, यतो हि कृष्णद्वैपायनकालेऽपि एष सन्देहः प्रादुरभवत्। महाभारते शान्तिपर्वणि (९०।७) एतद्विवेचनप्रसङ्गे उक्तम्—

अधर्मे वर्तमानानामर्थसिद्धिः प्रदृश्यते।
तदेव मङ्गलं लोकः सर्वस्तमनुवर्तते॥ इति।

एतस्य समाधानमपि मनुनोक्तम्—

अधर्मेणैधते तावत्ततो भद्राणि पश्यति।
ततः सपत्नाञ्जयति समूलस्तु विनश्यति॥
अधार्मिको नरो यो हि यस्य चाप्यनृतं धनम्।
हिंसारतश्च यो नित्यं नैवासौ सुखमेधते॥ इति।

वस्तुतोऽधर्मे प्रवृत्तय उपायविशेषाचरणस्यावश्यकता न भवति, न च तच्छिक्षणस्य। तत्र प्रवृत्तिस्तु स्वभावत एव जायते। तदुक्तं सोमदेवसूरिणा—"अधर्मकर्मणि को नाम नोपाध्यायः पुरश्चारी वा" इति। कदाचिल्लौकिकतथाऽभिभूतो विद्वानपि श्रुति-स्मृतिशास्त्राचार्यानुमोदितं परम्परागतं सत्यं सत्पथमपहाय पाखण्डमये कुपथे प्रवर्तते। एतादृशं हतभाग्यमभिलक्ष्यैव केनापि सहृदयेन गीतम्—

स्थितवति त्वयि दातर्यस्मदभ्यर्थिताना-
मितरमनुसरन्तो दर्शयन्तोऽर्थिमुद्राम्।
चरमचरणपातैर्दुर्ग्रहं दोग्धुकामाः
करभमनुसरामः कामधेनौ स्थितायाम्॥ इति।

'नीतिवाक्यामृते' इदमप्याख्यातं यदधर्माचरणेनाधर्म एव हस्तगतो भवति, तदुपार्जितं धनादिकं त्वन्य एवोपभुङ्क्ते; यथा सिंहः सिन्धुरं हन्ति, तन्मुक्तादिकं त्वन्यस्य वनेचरस्यैव हस्तगतं भवति—"धर्मातिक्रमाद्धनं परे नयन्ति, स्वयं तु पापस्य भाजनं सिंह इव सिन्धुरवधात्" इति। इत्थमेव अधर्माचारिणः पुरुषस्योपमा बीज-

भोजिना सह कृताऽस्ति। यथा बीजभोजी पुरुष आयतिं न पश्यति, अल्पस्य कृते बहुफलस्य हानिं करोति, तथैव अधर्माचारी स्वायतिं विनाशयति। यदाह सोमदेव-सूरिः—"बीजभोजिनः कुटुम्बिन इव नास्त्यधार्मिकस्य आयत्यां किमपि शुभम्" इति।

सर्वमिदं वक्तुं व्याख्यातुं श्रावयितुं च सर्वेषां कृते सुकरम्, किन्तु धर्माधर्म-विचारः परम-कठिनः। यथा एकत्र सत्यभाषणं धर्मः, अपरत्र तदेवाधर्मः। एकस्य कृते-ऽहिंसा धर्मः, अपरस्य कृते सैवाधर्मः। यथा कश्चिद्वधिको हन्तुं गामनुधावति, तदा धावन्ती सा गौः केनचित्पथाऽन्तर्हिता चेत्तदा पृच्छन् स दुष्टः सत्येन न संयोजनीयः, प्रत्युतासत्येनैव वञ्चनीयः। अत्रासत्यं वञ्चना च धर्मः, सत्यमवञ्चनं पुनरधर्मः। अत एव गीतायामर्जुनं प्रति युद्धस्योपदेशः। एवञ्चापराधिने दण्डदानम्, वधाज्ञादि-प्रदानं च राज्ञः प्राड्विवाकस्य वा कृते धर्मकोटावेव गण्यते। अत एवाह मनुः—

शूद्रविट्क्षत्रविप्राणां यत्रर्तोक्तौ भवेद्वधः।
तत्र वक्तव्यमनृतं तद्धि सत्याद्विशिष्यते॥ इति।

अतो धर्मतत्त्वस्य वास्तविकं रहस्यं ज्ञातुमान्वीक्षिकी-त्रयी वार्ता-दण्डनीति-विद्यानां यथार्थविज्ञानं परमावश्यकम्। यतो हि एभिश्चतसृभिर्विद्याभिर्धर्मपर-मार्थता प्रकाश्यते। अत एव धर्मस्य रहस्यमतिगहनमिति विषये पूर्वदेवगुरुर्नीतिशास्त्रा-चार्यो महर्षिः श्रीशुक्राचार्य इत्थमभिमनुते—

स्वधर्मं परमं मत्वा परस्वहरणं नृपाः।
परस्परं महायुद्धं कृत्वा प्राणान्त्यजन्त्यपि॥
सर्वं पापं धर्मरूपं स्थितमाश्रयभेदतः।
बहुभिर्यः स्तुतो धर्मो निन्दितोऽधर्म एव सः।
धर्मतत्त्वं हि गहनं ज्ञातुं केनापि नोचितम्॥

(शुक्रनीति, ७६।८१)

अतो धर्मतत्त्वस्यातिगहनत्वाद् अद्यपर्यन्तमस्य बहूनि लक्षणानि कृतानि, बह्वो व्याख्या आचार्यैः कृताः। अद्याप्यस्य मीमांसा क्रियते, अग्रे च भविष्यति। तस्मादिदमेव सर्वसम्मतं धर्मस्य तत्त्वं लक्षणं रहस्यं चेति न कोऽपि वक्तुं पारयति। तथाप्यनुभवेन, युक्त्या, आप्तोपदेशैश्चेदं वक्तुं पारयामो यत्सर्वजगतः कल्याणसम्पादनाय धर्मः प्रत्येकं व्यक्ति-समाज-वर्णाश्रम-देशकालाद्यनुरूपं वर्णाश्रम-

धर्म-सेवाधर्म-राजधर्म-देशधर्मापद्धर्म-भगवद्धर्माद्यनेकनामरूपेष्वाविर्भूय सर्वमपि प्राणिजातं मर्यादितं कृत्वा, उत्पथात् सत्पथेन संयोज्य सत्ये सुखे प्रवर्तयति। यथा श्रीमद्भागवते—

ये स्वधर्मान्न दुह्यन्ति धीराः कामार्थहेतवे।
निःसङ्गा न्यस्तकर्माणः प्रशान्ताः शुद्धचेतसः ॥
निवृत्तिधर्मनिरताः निर्ममा निरहङ्कृताः।
स्वधर्माख्येन सत्त्वेन परिशुद्धेन चेतसा ॥
सूर्यद्वारेण ते यान्ति पुरुषं विश्वतोमुखम्।
परावरेशं प्रकृतिमस्योत्पत्यन्तभावनम् ॥ इति।

विवेकिनां प्रधानेच्छाविषया धर्मार्थकाममोक्षाश्चत्वारः पुरुषार्थाः। एतत्प्राप्त्यै चाव्यभिचरितो मुख्य उपायो धर्म एव। स एवैतेषु प्रधानः, यतः काममोक्षौ तु केवलं मलस्वरूपौ, अतो न ताभ्यां कश्चित्पुरुषार्थः सिद्ध्यति। अर्थश्चाल्पशक्तिमान्, तत्राप्यनेकदोषदूषितः। अत एव पुरुषार्थसाधकतया धर्म एव सर्वपुरुषार्थसम्राडिति च हेतोः 'धर्मान्न प्रमदितव्यम्' इति श्रुतिं निवेदयन् विरमामि।

———

# श्रौतदेवतास्तत्संज्ञा हवींषि च

कात्यायनश्रौतसूत्रानुसारेण।

( "सारस्वती सुषमा'–पत्रिकायास्तृतीयवर्षाङ्कादनुवृत्तो लेखः )

श्रीभगवत्प्रसादमिश्रः वेदविभागाध्यक्षः, वा० सं० वि० वि० वाराणसी।

### त्र्यम्बकेष्टेः

| देवता-नामानि | देवता-विशेष-संज्ञा कर्म-विशेष-संज्ञा वा | द्रव्यम् (हविः) | विशेषवक्तव्यम् |
|---|---|---|---|
| रुद्रः | प्रधान-देवता | एक कपालाः पुरोडाशाः | |

एककपालोपधानचित्रम्



त्र्यैयम्बका एककपालाः पुरोडाशाः यावन्तो यजमानगृह्यास्तेभ्य एकाधिका भवन्ति चत्वारो वा। अत्र होमो भवति, न

यागः। तत्र मतद्वयम्—दर्विहोमाः पौर्णमासधर्मा इति कात्यायनः। अद्धर्या इति जैमिनिः। तत्र दर्शपौर्णमासधर्मा दर्विहोमा इति पक्षाश्रयणे त्र्यैयम्बकेषु शतरुद्रियादिवद् अग्न्यन्वाधानादि-कर्मापवर्गान्तं तूष्णीं भवति, तथैव कर्कमतानुसारिणः कुर्वन्ति। अपूर्वपक्षे यावदुक्तमेव भवति, नाधिकम्। तदा चाध्वर्युरेक एव सर्वं करोति यथाश्रुतमिति हरिस्वामिनः।

अत्रायं संक्षिप्तो मुख्यप्रयोगः—दक्षिणाग्नेरुल्मुकमादाय पात्री-शृतावदान-पलाशपत्रासन-दण्डशिक्याद्युपयुक्तं सर्वमादाय ब्रह्मयजमानाग्नीदध्वर्यव उदीच्यां दिशि चतुष्पथं गच्छन्ति। तत्र परिसमूहनादि कृत्वा तमानीतमुल्मुकमुदङ्मुख उपसमादधात्यध्वर्युः। तस्य पुरस्तात् प्रत्यङ्मुखौ ब्रह्मयजमानावुपविशतः। तयोरुत्तरतो ब्रह्मा दक्षिणतो यजमानः। अध्वर्युरग्निं परिस्तीर्य समिधमाधाय पलाशपत्रे सर्वेषामतिरिक्तवर्जितानां पुरोडाशानामुत्तरार्धात् सकृत् सकृदवदाय प्राणादानं कृतं चेदत्रोपस्तारा-भिघारावपि कृत्वा तस्मिन्नग्नौ 'एष ते रुद्र भागः (शु० सं० ३।५७) इति जुहुयात्। अतिरिक्तं पुरोडाशमुत्तरां दिशं गत्वा आखुभिरुत्कीर्णे पांशुराशौ 'एष ते रुद्र भागः' ( शु० सं० ३।५७ ) इति अन्तर्हितं कुर्यात्।

## शुनासीरीयपर्वण:

इदं शुनासीरीयसंज्ञकं चातुर्मास्यानां चतुर्थं पर्व साकमेधसमनन्तरं तत्कालमेव भवति। शाखान्तराद् द्व्यहे त्र्यहे चतुरहे वा, मार्गशीर्ष्यां पौष्यां माघ्यां फाल्गुन्यां वा पूर्णिमायां यदा इच्छा भवेत्तदा भवति। अत्राष्टौ प्रधानदेवता:।

(१) अग्नि: प्र० दे० अष्टाकपाल: पुरोडाश:

अष्टाकपालोपधानचित्रम्




(२) सोम: प्र० दे० चरु:

चरूणां प्रथनाद्भिरभिमर्शनादीनि न भवन्ति, अधस्ताच्छ्रपणादानं नोपरि।

(३) सविता प्र० दे० द्वादशकपालः अष्टाकपालो वा पुरोडाशः,

द्वादशकपालोपधानचित्रम्




(४) सरस्वती प्र० दे० चरुः

(५) पूषा प्र० दे० पिष्टमयश्चरुः

(६) शुनासीरौ (इन्द्रः शुनासीरः) प्र० दे० द्वादशकपालः पुरोडाशः ”

शुनश्च सीरश्च शुनासीरौ। शुनो वायुः, सीर आदित्यः। समुच्चितयोर्द्वयोः शुनासीरयोः स्थाने 'इन्द्रः शुनासीरः' एका देवता। इयं वैकल्पिकी देवता।

(७) वायुः प्र० दे० पयः वा यवाग्वः

प्रयोगमध्य एव आज्यनिर्वापानन्तरं पयः, धारोष्णं दुग्धम् (श० ३।३।३।२) इदं सम्पादनीयम्। तण्डुलानां शिथिलः पाको यवागूः। अयं हविषो विकल्पः। यवागूपक्षे उपांशुत्वम्।

(८) सूर्यः प्र० दे० एककपालः पुरोडाशः

अत्र वपनाभावः। अग्निमन्थनं विकल्पेन 'न मन्थत्यग्निम् (श० ब्रा० २।६।३।३) तेषां वै चतुर्ष्वग्निं मन्थन्तीति (श० ब्रा०

११।५।२।८) विहितप्रतिषिद्धत्वात्।

तत्रामन्थनपक्षे सर्वं पौर्णमासवत्, मन्थनपक्षे वैश्वदेववन्नव प्रयाजादि सर्वमिति बह्वृच-ब्राह्मणे श्रूयते—
"यद्वैश्वदेवस्य तन्त्रं तत्तन्त्रं, यद्यु न मथ्यते पौर्णमासमेव तन्त्रं भवति।" (ऐ० ब्रा० ५।११।३)। अमन्थनपक्षे त्रयोऽनुयाजाः।

अत्रोपांशुदेवतानामुच्चारणमुपांशु कर्तव्यमन्यासामुच्चैः। अन्ते शतब्राह्मणभोजनम्। एतस्य पर्वणः षड्भिर्बलीवर्दैर्युक्तं सीरं वोढारौ महान्तौ बलीवर्दौ वा दक्षिणा। सौर्ययागस्य श्वेतोऽश्वो गौर्वा श्वेतो दक्षिणा।

## मित्रविन्देष्टेः

(१) अग्निः प्र० दे० अष्टाकपालः पुरोडाशः

अष्टाकपालोपधानचित्रम्




मित्रविन्देयमिष्टिः काम्या। श्रीकामनायां राष्ट्रकामनायां मित्रकामनायाम्

आयुष्कामनायां चेति चतसृषु कामनासु विहिता। अत्र दश देवताः, दश हवींषि च सन्ति; परं दशानामपि हविषां तन्त्रेण एकमेव प्रदानं भवति। तत्र पञ्च चरु-हवींषि, चत्वारि च पुरोडाशहवींषि नित्यानि। एकस्मिन् हविषि चरु-पुरोडाशयोर्विकल्पः। हविषः प्रदाना-नन्तरं एताभ्य एव देवताभ्यः पृथक्-पृथक्-सूत्रपठितमन्त्रैरेकैकया आज्याहुत्या होमः। एतेषां 'उपहोमः' इति संज्ञा।

| | | |
|---|---|---|
| (२) सोमः | प्र० दे० | चरुः |
| (३) वरुणः | प्र० दे० | दशकपालः पुरोडाशः यावश्चरुर्वा |

दशकपालोपधानचित्रम्




अनुवाचनप्रैषः—यजति, प्रैषेषु प्रत्येकं देवतायाः पृथक् पृथक् चतुर्थ्यन्तं नाम्नः समुच्चारणम्। अनुवाक्यामन्त्रः सौत्रः, तत्र सर्वासां देवतानामनुक्रमेण निर्देशः। याज्यामन्त्रः श्रौतः (श० ११।४।३।७)।

तत्र तासां देवतानां प्रतिलोमक्रमेण निर्देश इति विशेषः। अत्र पञ्चदश सामिधेन्यः। पुष्टिमन्तावाज्यभागौ।

(४) मित्रः प्र० दे० चरुः

(५) इन्द्रः प्र० दे० एकादशकपालः पुरोडाशः

एकादशकपालोपधानचित्रम्




(६) बृहस्पतिः प्र० दे० चरुः

(७) सविता प्र० दे० द्वादशकपालः पुरोडाशः। अष्टाकपालो वा

(८) पूषा प्र० दे० चरुः

(९) सरस्वती प्र० दे० चरुः

(१०) त्वष्टा प्र० दे० दशकपालः पुरोडाशः

उपहोमाः ( दश )

(१) अग्निः प्र० दे० आज्यम्

(२) सोमः प्र० दे० आज्यम्

(३) वरुणः प्र० दे० आज्यम्

(४) मित्रः प्र० दे० आज्यम्

स्विष्टकृतः पूर्वं स्थालीस्थेनाज्येन स्रुवेण सौत्रमन्त्रैश्च सर्वे उपहोमाः।

(५) इन्द्रः प्र० दे० आज्यम्
(६) बृहस्पतिः प्र० दे० आज्यम्
(७) सविता प्र० दे० आज्यम्
(८) पूषा प्र० दे० आज्यम्
(९) सरस्वती प्र० दे० आज्यम्
(१०) त्वष्टा प्र० दे० आज्यम्
अग्निः स्विष्टकृत् अं० दे० उक्तानि दश हवींषि

अत्र स्विष्टकृतो याज्यानुवाक्ये विराट्छन्दस्के सहस्रपदघटितानुष्टुप् – छन्दस्के वा भवतः।

अत्रोपदिष्टानि श्रीराष्ट्रमित्रायूंषि फलानि किमेकेनैव मित्रविन्दाप्रयोगेण भवन्ति उत प्रतिकामं प्रयोगभेद इति जिज्ञासायां जैमिनिमहर्षिणा योगसिद्धिन्यायद्वारा एकस्मात् प्रयोगादेकमेव फलमिति सिद्धान्तितम्। अस्या दक्षिणा सहस्रं दश वा गावः।

## निरूढपशुबन्धयागस्य

अयं पशुबन्धयागः प्रतिसंवत्सरं वर्षर्तौ कस्याञ्चिद् अमायां पौर्णमास्यां वाऽनुष्ठेयः। अथवा एकस्मिन् संवत्सरेऽयनद्वयं भवति, तयोः प्रथमदिवसे याग इति वर्षे द्विवारमनुष्ठानम्। पशुयागस्यास्य 'निरूढपशुबन्ध' इति संज्ञा याज्ञिकानाम्। अत्र षड् ऋत्विजः—अध्वर्युः, प्रतिप्रस्थाता, होता, मैत्रावरुणः (प्रशास्ता), ब्रह्मा, अग्नीध्र।

विष्णुः अं० दे० चतुर्गृहीतमाज्यम्

अस्याहुतेः 'यूपाहुति'रिति संज्ञा। पशुबन्धनार्थं विहितदारुमयोऽष्टास्रिः

तत्तत्कार्यानुसारी दण्डात्मको यूपः, तदर्थमियमाहुतिर्यूपाहुतिः। इयं यूपाहुतिः सर्वत्रैव यूपकार्ये भवति; परं 'साद्यस्का' इति संज्ञका य एकाहाः सोमयागाः सन्ति, तत्र खलेवाली यूपो भवति। खलेवालीनाम—धान्यादिखलमध्यनिखाता मेथी, सैव यूपकार्ये भवति। एतस्या अच्छेद्यत्वाद् यूपाहुत्या बाधो भवति।

वनस्पतिः अं० दे० यूपाहुतिशेषमाज्यम्

जुहोतिरियं 'स्थाण्वाहुति'संज्ञया व्यपदिश्यते। यूपच्छेदानन्तरं वृक्षस्यावशिष्टो भागः स्थाणुः, तत्रेयमाहुतिर्भवति स्रुवेण। इयमपि साद्यस्के खलेवाल्यां बाधिता भवति।

वाचस्पतिः अं० दे० पञ्चगृहीतमाज्यम्

अयं षड्ढोतृहोमः। अत्र विनियुक्तस्य मन्त्रस्य 'षड्ढोता' इति संज्ञा। तेन क्रियमाणत्वादस्य 'षड्ढोतृहोम' इति संज्ञा। अयं होमो निरूढपशावेव भवति, नाग्नीषोमीयादिषु पशुयागेषु।

प्रजापतिः अं० दे० आज्यम्

इयमवटाहुतिः। यस्मिन् देशे यूपो निखन्यते, स गर्तः 'अवटः'। तत्रेयमाहुतिः। अत्र स्रुवेण तूष्णीं होमः प्राजापत्यत्वात्। तूष्णींहोमे कारणं श्रुतामेवमुपदिष्टम्—

एकदा मनसो वाचश्च परस्परं वाक्कलहः समजनि। मनसोक्तम्—अहं त्वत्तः श्रेष्ठमस्मि, त्वं तु मत्तः कनीयसी'ति। वाचा उक्तम्—'अहं त्वत्तः श्रेयसी, त्वं तु मत्तः कनीयः' इति।

कलहायमानाभ्यां वाङ्मनसाभ्यां निर्णयाय प्रजापतिसमीपं गत्वा स प्रार्थितः। मनसा उक्तम्—'भगवन्! अहं वाचः श्रेयोऽस्मि, न वै ममानभिमतमियं वाक् किञ्चन वक्तुं शक्तास्ति। मम कृतानुकारिणी, अनुचारिणी वेयं वाक्। अतोऽहमेव वाचः श्रेयोऽस्मि।' वाचा उक्तम्—अहमेवैतस्मान्मनसः श्रेयसी। यद्वै मनो वेत्ति तदहं विज्ञापयामि। मत्साहाय्यमन्तरा मनः किमपि बोधयितुं न प्रभवतीति प्रकाशकारित्वादहं मनसः श्रेयसी।'

उभयोर्विवादं श्रुत्वा प्रजापतिना निर्णयः प्रदत्तो यत् कृतानुकारित्वमनुवादित्वं च कनीयसः कार्यं भवतीति वाचो मन एव श्रेय इति। तदिदं प्रजापतेर्निर्णयं श्रुत्वा व्यपगतगर्वा वाणी क्षुब्धा प्रजापतिमुवाच—

'यस्माद्ध्यहं त्वया मनसः कनीयसीत्युद्घोषितं तस्मादहं भवतो यज्ञं न वक्ष्यामीति। ततः प्रभृति प्रजापतेराहुतिर्वाचा मन्त्रोच्चारणमकृत्वा प्रदीयते। केवलं मनस एव योगस्तत्रास्तीति प्रजापतेस्तूष्णींहोमः।

प्रयाजयागेषु

| | | |
|---|---|---|
| (१) समिधः | अं० दे० | आज्यम् |
| (२) तनूनपात् | | |
| नराशंसो वा | " | " |
| (३) इडः | " | " |

अत्र पशौ एकादश प्रयाजाः। तत्र यागप्रैषे 'यज' इत्यनुक्त्वा "प्रेष्य" इति कथनीयम्। अपाशुकेषु यागेषु 'यत्रैकादश प्रयाजाः' इत्युपदिश्यते, तत्र ऐष्टिकानां

| | | | |
|---|---|---|---|
| (४) बर्हिः | अं० दे० | आज्यम् | पञ्चानां प्रयाजानां द्विरावृत्त्या दशत्वं सम्पाद्य पञ्चममात्रस्य तृतीयावृत्त्यैकादशत्वं सम्पादनीयमिति जैमिनीयराद्धान्तः ( ५।३।१ )। चतुर्थ-सप्तम-दशमेषु समानयनमत्र विधेयम्। अयं प्रयाजयागो वपाश्रपणोत्तरं कर्तव्यः। |
| (५) द्वारो देव्यः | " | " | |
| (६) उषासानक्ता | " | " | |
| (७) दैव्यौ होतारौ | " | " | |
| (८) तिस्रो देव्यः | " | " | |
| (९) त्वष्टा | " | " | |
| (१०) वनस्पतिः | " | " | |
| (११) स्वाहाकृतयः | " | " | |
| देवाः | अं० दे० | आज्यम् | सकृद्गृहीतेन होमः। पूर्णाहुतिधर्मः। पशोः संज्ञपनात् पूर्वं पश्चाच्चेयमाहुतिः। अनयोः 'परिपशव्याहुती' इति संज्ञा। इमे आहुती कुर्यान्न वा कुर्यादिति विकल्पः। |
| रक्षांसि | अं० दे० | लोहितम् | तृणमूलं संज्ञप्तस्य पशोः लोहितेनाक्त्वा रक्षसामुद्देशेनोत्करे प्रक्षेपः। |
| अग्निः | अं० दे० | आज्यम् | स्रुवेण वपाया उपरि होम इति देवयाज्ञिकाः। |
| अग्निः | अं० दे० | आज्यम् | प्रथमा आज्यभागदेवता। निरूढपशौ आज्यभागौ विकल्पितौ। |
| सोमः | अं० दे० | आज्यम् | द्वितीया आज्यभागदेवता। |
| इन्द्राग्नी | प्र० दे० | वपा | निरूढपशौ तिसृषु देवतास्वेका देवता प्रधानत्वेन यष्टव्या, या स्वीकृता तस्या वपया यागः। |
| वा सूर्यः | " " | वपा | |
| वा, प्रजापतिः | " " | वपा | |
| इन्द्राग्नी | प्र० दे० | द्वादश-कपालः पुरोडाशः | अत्रैका प्रधानदेवता। तत्र देवतास्तिस्रो विकल्पेनोपदिष्टाः, तत्रेयं विकल्पिता प्रथमा देवता। |

| | | | |
|---|---|---|---|
| सूर्यः | प्र० दे० | अष्टाकपालः पुरोडाशः | द्वितीया विकल्पिता देवता। |
| प्रजापतिः | प्र० दे० | अष्टाकपालः पुरोडाशः | तृतीया विकल्पिता देवता। |
| रक्षांसि | अं० दे० | लोहितम् | उत्करस्योत्तरतो गर्ते लोहितप्रक्षेपः। |
| अन्तरिक्षम् | अं० दे० | वसा | |
| इन्द्राग्नी | प्र० दे० | पशुः | तिसृषु देवतास्वेका देवता या स्वीकृता तस्या यागः। जुह्वा पश्वङ्गग्रहणम्। तत्र प्रधानयागे पशोः एकादश जौहवान्यङ्गानि— |
| सूर्यः | प्र० दे० | पशुः | |
| प्रजापतिः | प्र० दे० | पशु० | |
| | | | (१) हृदयम्, (२) जिह्वा, (३) क्रोडम् = वक्षोभुजयोरन्तरालम्, (४) सव्यसक्थिपूर्वनडकम् = सव्यबाहोः प्रथमं नडकम् अंसादधो वर्तमानम्, (५) सव्यपार्श्वम् = त्रयोदशवङ्क्र्यात्मकम्, (६) दक्षिणपार्श्वम् = त्रयोदशवङ्क्र्यात्मकम्, (७) यकृत, (८-९) वृक्कौ = कुक्षिस्थौ गोलकौ (१०) गुदतृतीयाणिष्ठम्, (११) दक्षिणा श्रोणिरिति। |
| वनस्पतिः | अं० दे० | पृषदाज्यम् | वनस्पतिः स्विष्टकृद्विकार इति मध्यमस्वरेण प्रैषाद्युच्चारणम्। |
| अग्निः स्विष्टकृत् | अं० दे० | पश्वङ्गानि | उपभृता पश्वङ्गानां यागः। तत्र उपभृत्सम्बन्धीन्यवदानानि त्रीणि— (१) दक्षिणसक्थिपूर्वनडकम् = दक्षिणबाहोः प्रधाननडकमंसादधो वर्तमानम्, (२) गुदतृतीयाणिष्ठम् = आन्त्रस्यातिकृशस्तृतीयो भागः। (३) सव्या श्रोणिः। |
| दिशः | अं० दे० | वसाशेषः | अग्नेः पूर्वभागे। |
| प्रदिशः | अं० दे० | वसाशेषः | अग्नेर्दक्षिणभागे। |
| आदिशः | अं० दे० | वसाशेषः | अग्नेः पश्चिमभागे। |

| | | | |
|---|---|---|---|
| विदिशः | अं० दे० | वसाशेषः | अग्नेरुत्तरभागे |
| उद्दिशः | अं० दे० | वसाशेषः | अग्नेः पूर्वार्धे । |

## अनुयाजयागेषु

| | | | |
|---|---|---|---|
| (१) देवं बर्हिः | अं० दे० | पृषदाज्यम् | अग्नेः पूर्वार्धे द्रव्यप्रक्षेपः । |
| (२) देव्यो द्वारः | " | " | अग्नेर्मध्ये द्रव्यप्रक्षेपः । |
| (३) देव्यौ उषासानक्ता | " | " | " द्रव्यप्रक्षेपः । |
| (४) देव्यौ जोष्ट्र्यौ | " | " | " चतुर्थे समानयनम् । |
| (५) देव्यौ ऊर्जाहुती | " | " | " |
| (६) देव्यौ होतारौ | " | " | " |
| (७) तिस्रो देव्यः | " | " | " सप्तमे समानयनम् । |
| (८) देवो नराशंसः | " | " | " |
| (९) देवो वनस्पतिः | " | " | " अग्नेः पश्चाद् द्रव्यप्रक्षेपः । |
| (१०) देवो बर्हिः | " | " | " दशमे समानयनमाज्यस्य । |
| (११) देवः अग्निः स्विष्टकृत् | " | " | " |

## उपयड्ढोमाः

| | | | |
|---|---|---|---|
| (१) समुद्रः | अं० दे० | पश्वङ्गम् | एकादशानुयाजा प्रधानतया इज्यन्ते । |
| (२) अन्तरिक्षम् | " | " | तस्मिन्नेवावसरे प्रतिप्रस्थाता एकादशधा |
| (३) देवः सविता | " | " | गुदात्मकं पश्वङ्गमेकादशधा छित्त्वा प्रत्येक- |
| (४) मित्रावरुणौ | " | " | स्मिन्ननुयाजवषट्कारे हस्तेन एता- |
| (५) अहोरात्रे | " | " | नेकादशहोमान् कुर्यात् । अनुयाजद्रव्यप्रक्षेपे |
| (६) छन्दांसि | " | " | कृतेऽयं होमः । तत्रानुयाजत्यागान्ते च |
| (७) द्यावापृथिवी | " | " | प्रत्याहुतित्याग इति यजत्यनन्तरं क्रियमाण- |
| (८) यज्ञः | " | " | त्वाद् उपयड्ढोमाः ( उप + यज् + होमाः । |
| (९) सोमः | " | " | इत्यन्वर्थसंज्ञा । |
| (१०) दिव्यं नभः | " | " | |
| (११) अग्निर्वैश्वानरः | " | " | |

| | | | |
|---|---|---|---|
| देवाः | अं० दे० | आज्यम् | प्राचीयमाहुतिर्देवयाज्ञिकमते। |
| स्वरुः | " | स्वरुः | यूपच्छेदने प्रथमपतितः काष्ठखण्डः स्वरुः कथ्यते। |

पत्नीसंयाजेषु

| | | | |
|---|---|---|---|
| (१) सोमः | अं० दे० | पश्वङ्गम् आज्यं वा | पत्नीसंयाजेषु नोपस्ताराभिघारौ गार्हपत्ये यागः। जाघन्या उपरिभागाच्चतुरवदानम्। |
| (२) त्वष्टा | " | " | " " |
| (३) देवानां पत्नीः | " | पश्वङ्गम् | उत्तानाया जाघन्याः अन्तःप्रदेशाच्चतुरवदानम्। |
| (४) अग्निर्गृहपतिः | " | " | जाघनीं पर्यावर्त्याधोमुखीं कृत्वा तत्रोपरिभागावदानम्। |
| (१) अग्निः संवेशपतिः | अं० दे० | आज्यम् | दक्षिणाग्नौ होमः। |
| (२) सरस्वती यशोभगिनी | " | " | " " |
| (३) इन्द्राग्नी | " | " | " " |

समष्टियजुषि

| | | | |
|---|---|---|---|
| (१) वातः | अं० दे० | आज्यम् | अत्र ध्रौवमाज्यम्, विग्राहं होमः। |
| अग्निः | " | " | वातस्थाने विकल्पिता देवता। |
| (२) यज्ञः | " | " | |
| अग्निः | " | " | यज्ञस्थाने विकल्पिता देवता। |
| (३) यज्ञपतिः | " | " | |
| विष्णुः | " | " | प्राकृताहवनीये होमः। |

[ इति निरूढपशुबन्धः ]

---

# त्रैपुर-दर्शनम्

श्रीबटुकनाथशास्त्री खिस्ते साहित्य-प्राध्यापकः वा० सं० वि० वि० वाराणसी।

आचार्यतनुमाश्रित्य बोधयन्ती परापरान्।
तत्त्वार्थान् सा जयत्येका चन्द्रमौलिकुटुम्बिनी॥

शैव-शाक्तदर्शनपरम्परासु परिचयभाजां विदुषां तदन्यतमत्वेन प्राधान्येन वा श्रीविद्यासम्प्रदायस्तदीयं विपुलतरं वाङ्मयञ्च श्रुतिगोचरीभूते विद्येते एव। सम्प्रदाय-स्यास्य विशेषस्तावदयम्—आगम-वेदभागयोः समशीर्षिकया परिगणनमुपयोगश्च सम्प्रदायेऽस्मिन् परिदृश्यते, तत एव च श्रीशङ्करभगवत्पादाप्पयदीक्षितभास्कर-रायराघवभट्टप्रभृतीनां महात्मनां महाविदुषाञ्च दर्शनेऽस्मिन् साभिनिवेशं प्रवृत्ति-स्तत्तद्ग्रन्थव्याख्यातृत्वञ्चावलोक्यते। प्रत्यभिज्ञादर्शने श्रीमदभिनवगुप्तपादा-चार्या इव श्रीविद्यापराभिधत्रैपुरसम्प्रदायेऽस्मिन् व्याख्यातृषु मूर्धन्यभावं श्रीभास्कर-रायदीक्षितेन्द्रा भजन्ते। विविधप्रकारैर्व्याख्यानप्राचुर्यं परम्परायामस्यामपि दृश्यते। सम्प्रति लेखेऽस्मिन् त्रिपुरारहस्यज्ञानखण्डीयं विषयमवलम्ब्य संक्षेपेण प्रमेय-विचारः प्रस्तूयते।

अत्रेदं किञ्चिदैतिह्यमुपयुज्यते—पुरा किल ब्रह्मलोके ब्रह्मसभायां समवेतायां समुपस्थितेषु महर्षिवृन्दारकेषु सूक्ष्मातिसूक्ष्मपरतत्त्वविचारः प्रादुरभूत्। 'परतत्त्व-निर्णये नाहं साकल्येन समर्थः' इति ब्रह्मणोत्तरिते विष्णुलोकं गतेष्वेतेषु विष्णुना-ऽपि तथैवोक्ते महेश्वरं सम्प्राप्ता महर्षयः। भगवान् महेश्वरोऽपि तथैवोत्तरितवान्। अथ सर्वेष्वेवासमर्थेषु ब्रह्मविष्णुमहेश्वराः परतत्त्वनिर्णयाय भगवतीं महाविद्यां ध्यायन्त-श्चिरं प्रसादयामासुः। कारणपुरुषाणां ब्रह्मादीनां महर्षीणाञ्च तपसा परितुष्टा चिच्छरी रिणी त्रिपुरा चिदाकाशमभिव्याप्य वर्त्तमाना शब्दब्रह्ममयी प्रादुरासीत्। गगनाङ्गणे मेघगम्भीरनिस्वनः प्रादुर्बभूव—

वदन्त्वृषिगणाः किं वो ध्याता तद् द्रुतमीहितम्।
मत्पराणां हि केषाञ्चिन्न हीयेताभिवाञ्छितम॥ इति।

अथ ब्रह्मादयो यथोचितं स्तोत्रादिभिर्महाविद्यां परितोष्य स्वीयान् प्रश्नानवतारयामासुः । यथा—

ब्रूहि यत्ते परं रूपमैश्वर्यं ज्ञानमेव च ।
फलं तत्साधनं मुख्यं साधकं सिद्धिमेव च ॥
सिद्धेस्तु परमां काष्ठां सिद्धेषूत्तममेव च ।
देव्येतत् क्रमतो ब्रूहि..........॥ इत्यादिना ।

अथ भगवत्या महाविद्यया साररूपेण प्रत्येकं प्रश्नाः समाहिताः, सारभूतमागमानाममृतमिदमिति च सूचितम । यथा—'अमृतं ह्यागमाम्भोधेः समुद्धृत्य ददामि वः' इति ।

तत्र प्रथमप्रश्ने 'यत्ते परं रूप'मित्यत्र 'अ'कारप्रश्लेषेण प्रश्नस्यांशद्वयं परम्, अपरमिति सञ्जायते । तदनुरोधेन प्रथमतः परं रूपं व्याख्यातम् । यथा—

परा प्रतिमैव देव्याः परं रूपमिति सिद्धान्तः । सा परा प्रतिभा किं स्वरूपेत्याकाङ्क्षायामिदमवधेयम्—इह खलु घटपटादिनानाविधविचित्रदृश्याकारा प्रतिभा ज्ञानशब्दवाच्या स्वप्रकाशानपह्नवनीया जागर्ति । यदि तस्या अपह्नवः स्यात्तर्हि न प्रश्नो नाप्युत्तरं घटते, प्रश्नप्रतिवचनादेः प्रतिभामात्रायत्तत्वात् । नहि तस्यास्तत्तद्दृश्याकारक्षणिकप्रतिभामात्रपरिनिष्ठितं रूपम्, स्मृत्यनुसन्धानाद्यनुपपत्तेः । अतस्तद्रूपं तत्तत्प्रतिबिम्बपरिच्छिन्नदर्पणांशराश्यनुस्यूतमहादर्पणात्तत्तद्दृश्याकारपरिच्छिन्नापरप्रतिभाधारा राश्यनुस्यूतमहाप्रतिमैव । एषैव परा प्रतिभा सामान्यज्ञानरूपा देशकालाद्यपरिच्छिन्ना परं रूपमिति त्रिपुरारहस्यदीपिकायां श्रीनिवासस्योक्तिः ।

अयमेवार्थः श्रीप्रत्यभिज्ञायां भङ्ग्यन्तरेण प्रतिपादितः—

सा स्फुरत्ता महासत्ता देशकालाविशेषिणी ।
सैषा सारतया प्रोक्ता हृदयं परमेष्ठिनः ॥ इति ।

'सौभाग्यभास्करे' श्रीभास्कररायदीक्षितैरपि "देशकालापरिच्छिन्ना" इति नामव्याख्यानेऽयमेवार्थः परामृष्टः । तद्यथा—"देशकालाभ्यामपरिच्छिन्ना, तत्कृतपरिच्छेदाभाववती । 'इह नास्ती'ति प्रतीतिविषयोऽत्यन्ताभावो देशतः परिच्छेदः, 'पूर्वं नासीदग्रे न भविष्यती'ति प्रतीतिविषयौ प्रागभावप्रध्वंसौ कालतः परिच्छेदः । 'अधुना नास्ती'ति त्वत्यन्ताभाव एव । ईदृशपरिच्छेदाभावो नाम तत्प्रतियोगित्वाभावः, प्रतियोगित्वसम्बन्धेन तयोरभावो वा तद्वतीत्यर्थः" इति ।

इदमेव परं रूपं त्रिपुराया यत्र दर्पणप्रतिविम्बन्यायेन जगदवभासते। यदुक्तम्—

यत्र सर्वं जगदिदं दर्पणप्रतिविम्बवत्।
उत्पन्नञ्च स्थितं लीनं सर्वेषां भासते सदा॥ इति।

ननु दर्पणे विम्बनिमित्तकं प्रतिविम्बभासनम्, परप्रतिभायां कुतो जगदवभासनमिति चेद्—उच्यते। स्वातन्त्र्याख्यशक्तिमहिम्नैव तदपि सङ्गच्छते।

ननु 'भासते' इत्युक्तेर्भास्यभासकद्वैतानपगमः; तदपि समाहितम्। यथा—"यद्योगिनां निर्विकल्पं विभात्यात्मनि केवलम्" इति। स्वात्मनि चिद्रूपे देहादिदृश्याभासलेशशून्ये केवलमहमित्यखण्डानुभवाकारे द्रष्टमात्ररूपेणैव तद्भानमिति भावः। यथोक्तं महर्षिणा दुर्वाससा शक्तिमहिमस्तोत्रे—'विश्वं व्याप्य चिदात्मनाहमहमित्युज्जृम्भसे मातृके' इति।

नन्वेवंविधे परप्रतिभारूपे योगिभिन्नानामस्मद्विधानां किं प्रमाणं येनाश्वासः सम्भवेदित्यत उच्यते–'यदभाने न किञ्चिन् स्याद् यच्छास्त्रैरभिलक्षितम्' इति। यत्स्वरूपानङ्गीकारे विश्वस्यसर्वस्याप्यन्धबधिरप्रायतापत्तिरिति व्यतिरेकेणोच्यते। शास्त्राणां तु लक्षणावृत्त्यैव प्रवृत्तिः, साक्षादभिधातुमसामर्थ्यात्। अत एव 'अभिलक्षितम्' इत्युक्तिः। ललितानामत्रिशत्यामपि पठ्यते—'लक्ष्यार्था लक्षणागम्या' इति। अत्रापि भूतकालिकप्रत्ययविधानाच्छास्त्रैरभिलक्षितं तिष्ठत्येवेति सूच्यते। इदमेव परं रूपं महाविद्याया इति प्रथमप्रश्नस्य प्रथमोऽशः समाहितः।

अथापरं रूपं व्याख्यायते—तत्तु सगुणं सगुणसदृशं वा। साम्प्रदायिकास्तु सगुणसदृशं न पुनः सगुणमिति विवृण्वते, षट्त्रिंशत्तत्त्वसंख्यानवेलायां गुणानामधोधःपरिदृश्यमानत्वात् तदूर्ध्ववर्तितत्त्वकदम्बकाधिष्ठितस्य रूपस्य गुणातीतत्वादिति तेषामभिप्रायः। यथोक्तं श्रीविद्याङ्घ्रिगीते—'सगुणसदृशकरुणाकृतिकलिते' इति। तत्स्वरूपं निरूपितं यथा—

ब्रह्माण्डानामनेकानां बहिरूर्ध्वे सुधाम्बुधौ।
मणिद्वीपे नीपवने चिन्तामणिसुमन्दिरे॥
पञ्चब्रह्ममये मञ्चे रूपं त्रैपुरसुन्दरम्।
अनादिमिथुनं यत्तदपराख्यं ऋषीश्वराः॥

इत्यादिश्लोकैः। 'अनेकब्रह्माण्डायूर्ध्वभावात्रस्थितिकथनादेव निरवधिकैश्वर्यनिरूपणाद्वारा सगुणमूर्तिभ्य उत्कृष्टत्वेन प्रशंसनमि'ति टीकायाम्।

त्रैपुरसुन्दरं त्रिपु पुरेषु धामसु जाग्रदादिषु सर्वस्पृहणीयत्वेनातिसुन्दरमनुगतं यत्परं रूपं परचिदात्मतत्त्वं तत्सम्बन्धिभक्तानुग्रहाय स्वस्वातन्त्र्यमात्रनिमित्तावभासितरूपमेव प्रधानमपरं रूपमित्याशयः। अप्रधानमपरं रूपन्तु—'गणेशस्कन्ददिक्पालाः शक्तयो गणदेवताः' इत्यादिना निरूपितं सर्वविधपूज्यदैवतकदम्बकात्मके ज्ञेयम्। 'यद्यद् विभूतिमत्सत्त्वं' इत्यादिगीतोक्तदिशा सर्वेषां मूलतेजोंऽशभागितयाऽप्रधानापररूपतेति संवदति सोऽयं निरूपणप्रकारः।

इदानीमैश्वर्यस्वरूपं निरूप्यते—तत्रापि मुख्यमैश्वर्यमेकम्, बहुविधान्यपरिगणनीयानि चान्यानि। स्वरूपाद्भिन्नं कारणमनपेक्ष्यैव जगदाकारेण स्फुरणं मुख्यमैश्वर्यम्। न च स्वांशभेदापेक्षया तथा स्फुरणमुपपादनीयम्; अखण्डचिन्मात्रत्वेन तत्रांशाभावात्। यथोच्यते—

अनपेक्ष्यैव यत्किञ्चिदहमद्वयचिन्मयी।
स्फुराम्यनन्तजगदाकारेण ऋषिपुङ्गवाः॥
तथा स्फुरन्त्यपि सदा नात्येम्यद्वैतचिद्वपुः।
एतन्मे मुख्यमैश्वर्यं दुर्घटार्थविभावनम्॥ इति।

अयं भावः—विचित्रजगदाकारस्य प्रतिबिम्बतुल्यत्वान्न मे स्वरूपप्रतिहतिः, गुरुशिष्यभावेन बन्धमोक्षादिलीलाश्च पुनः पुनः समाचरन्ती क्रीडामीति वा, निरुपादानसम्भारमेव जगदेतत् सृजामीति वा, यतो भूयस्यो ममैश्वर्यपरम्परा इत्यादि समुपवर्णितं महाविद्यैव। तदुक्तम्—

नित्यमुक्ता पुनर्मुक्ता भूयो भूयो भवाम्यहम्।
निरुपादानसम्भारं सृजामि जगदीदृशम्।
इत्यादि सन्ति बहुधा ममैश्वर्यपरम्पराः॥ इति।

अथ स्वेच्छामात्रकल्पिताविद्याबन्धनिवृत्तये ज्ञानस्वरूपमुच्यते—

मम ज्ञानं बहुविधं द्वैताद्वैतादिभेदतः।
परापरविभेदाच्च बहुधा चापि तत्फलम्॥ इत्यादिना।

ध्यातुः स्वातिरिक्तमूर्तिमन्त्रादिविविधविषयकध्यानमेव द्वैतज्ञानम्। अत एवाद्वैतज्ञानादस्यापकृष्टत्वम्। नन्वेवं ध्यानोपासनादीनां निष्फलत्वापत्तिरिति चेन्न। भगवन्नियतिशक्तिनियमितत्वाच्चित्तशोधनद्वारा मुख्यफल प्रापकत्वं न हीयते। अत एवोक्तम्—

तच्चापि सफलं ज्ञेयं नियत्या नियतं यतः। इति।

अपरस्वरूपनिर्णयप्रसङ्गे 'ब्रह्माण्डानामनेकानां बहिरूर्ध्वे सुधाम्बुधौ' इत्याद्युक्तदिशा स्फुटीकृतस्य दैवतस्योपासनमेव मुख्यफलप्रापकं भवतीति कथ्यते—

अपरञ्चाऽपि विविधं तत्र मुख्यं तदेव हि।
प्रोक्तमुख्यापरमयं ध्यानं मुख्यफलक्रमम्॥ इति।

यद्यपि—'अद्वैतविज्ञानमेव परविज्ञानमीरितम्' इति, तथाप्यपरमुख्यस्वरूपोपास्तिमन्तरा शुद्धचिदद्वैतस्वरूपप्रवेशो न लभ्यत इत्यस्त्यस्य शास्त्रस्य घण्टाघोषः। यथा—

मामनाराध्य परमां चिरं विद्यां तु श्रीमतीम्।
कथं प्राप्येत परमां विद्यामद्वैतसंज्ञिकाम्॥ इति।

अद्वैतविज्ञानं तावत् चित्तस्य शुद्धचिदात्मनि मज्जनेन तदेकीभावप्राप्त्या निर्विकल्पसमाधिरूपमेव। परं तादृशसमाधेर्व्युत्थितस्य तत्समाधावनुभूतं शुद्धचिद्रूपमनुविभातं सत्तदेव 'अहम्' इत्यखण्डाकारेण प्रत्यभिज्ञातं भवति। इदमेवं परं विज्ञानं जीवन्मुक्त्यवस्थाहेतुः।

एवंविधज्ञानद्वयस्य किं फलमिति जिज्ञासायामुच्यते—

विज्ञानस्य फलं सर्वदुःखानां विलयो भवेत्।
अत्यन्ताभयसम्प्राप्तिर्मोक्ष इत्युच्यते फलम्॥ इति।

भावनोपनिषद्यपि—"एवं···भावनापरो जीवन्मुक्तो भवति, स एव शिवयोगीति गद्यते" इत्युक्तम्। इदं फलं प्रधानतया प्रोक्तम्, आनुषङ्गिकाणि फलान्यर्थकामाद्यवाप्तिरूपाणि राज्यलाभादीनि तु नोक्तानि, ज्ञानिनां तत्र स्वरसतः प्रवृत्त्यभावात्, प्रत्युत तेषां प्रतिबन्धकत्वाच्च।

इदानीं साधनं वक्तुमुपक्रमते— "एवंविधमहामोक्षे तत्परत्वं हि साधनम्" इति। किं नाम तत्परत्वमिति जिज्ञासायामुक्तम्—'एतदवश्यं साधयिष्यामीति तत्साधनसम्पादने विलम्बासहनप्रयोजकचित्तवृत्तिविशेष एव' इति। इत्थं दृढव्यवसायस्य साधकस्य बुद्धिनैर्मल्यतारतम्येन शीघ्रं चिरेण वा लक्ष्यप्राप्तिर्भवत्येव। यथोच्यते—

दिनैर्मासैर्वत्सरैर्वा मुक्तः स्याद्वाऽन्यजन्मनि।
बुद्धिनैर्मल्यभेदेन चिरशीघ्रव्यवस्थितिः॥ इति।

यद्यपि बुद्धिदोषा बहवः सन्ति, परं सङ्कलय्य गणने त्रय एव। यथा—(१) अनाश्वासः, (२) कामवासना, (३) जाड्यञ्चेति। तेषामपि तद्विपरीतनिश्चयाभ्यासाच्छनैः शनैः परिक्षयो जायत इत्यलमप्रकृतेन।

अतः परं साधकस्वरूपं निरूप्यते—पूर्वोक्ततात्पर्यवान् परस्यां देवतायां दृढभक्तिशाली च साधक इत्युच्यते। केवलं साधनतत्परो योगाङ्गाद्यनुरक्तो भक्तिवर्जितश्चेन्न स फलभागिति निर्दिष्टम्। यथा—

यस्तु मामीश्वरीं सर्वबुद्धिप्रसरकारिणीम्।
अनादृत्य साधनैकपरः स्यान्मूढभावतः।
पदे पदे विहन्येत फलं प्राप्येत वा न वा॥ इति,
तत्र मद्भक्तियुक्तस्तु साधकः सर्वपूजितः। इति च।

इदानीं सिद्धिस्वरूपं प्रदर्श्यते—"सिद्धिरात्मव्यवसितिर्देहानात्मत्वभावना" इति। देहादिविलक्षणशुद्धचिन्मात्ररूपे सततावस्थानं सिद्धिरित्यर्थः। यद्यपि भूमिकाभेदादुपासकस्य काश्चन सिद्धयः स्वभावतो लभ्याः, काश्चित्तु काम्यकर्मादिनापि; तथापि ज्ञानिभिस्तत्र परमोपेयबुद्धिर्न विधेयेति तात्पर्येणोच्यते—

सिद्धयः खेचरत्वाद्या अणिमाद्यास्तथैव च।
आत्मविज्ञानसिद्धेस्तु कलां नार्हन्ति षोडशीम्॥ इति।

स्वात्मविज्ञानसिद्धिमतः उपासकधौरेयस्य पूर्वोक्ताः खेचरत्वाद्याः सिद्धयः सहजा एव सम्पद्यन्त इत्युक्तम्—'स्वात्मविद्यासाधनेषु ताः सर्वाः सुप्रतिष्ठिताः' इति।

साप्यात्मविज्ञानसिद्धिस्त्रिविधा—उत्तममध्यमाधमभेदात्। तत्रोत्तमा तावद् व्यवहारदशायां वर्तमानस्य समाधौ वा प्रविष्टस्य नित्यनिरवच्छिन्नशुद्धचिद्रूपान्यूना-

नधिकतया तिष्ठति। यथा—जनकादीनाम्। एवं जाग्रदाद्यवस्थात्रयेऽपि एकरूपतया या सा परमोत्तमेति कथ्यते। लोकस्य सर्वदा व्यवहारदशां प्रत्युन्मुखत्वं यथा स्वाभाविकम्, यादृशी च स्वरसवाहिनी प्रवृत्तिस्तादृश्येव यदा शुद्धचिद्रूपोन्मुखी सम्पद्यते तदैव 'सिद्धेः परमा काष्ठा' इति वक्तुं शक्यते। यदुक्तम्—

अयत्नेनैव परमे स्थितिः संवेदनात्मनि।
अव्याहता यदा सिद्धिस्तदा काष्ठां समागता॥ इति।

मध्यमाधमसिद्ध्योस्तु स्वरूपं शुद्धचिद्रूपोन्मुखत्वतारतम्यभेदादवगन्तव्यम्।

"एवं सिद्धिमनुप्राप्तः सिद्धेषूत्तम उच्यते" इत्युक्तदिशा पूर्वोक्त-सर्वोत्तमसिद्धि-साम्राज्यमनुभवतः पुरुषधौरेयस्यैव 'सिद्धोत्तम' पदेन व्यवहारः।

एवंविधस्य सिद्धिमतो बहूनि लक्षणानि निर्दिष्टानि सन्ति, परमेतावन्निष्कर्षो यत्—

सर्वं सुखञ्च दुःखञ्च व्यवहारञ्च जागतम्।
स्वात्मन्येवाभिजानाति स सिद्धेषूत्तमो मतः॥

इत्युक्तनयेन दर्पणवज्जगद्व्यवहारप्रतिबिम्बाश्रयत्वेन स्वरूपं जानानो नित्यमुक्तस्तिष्ठतीति। तादृशः सिद्धोत्तमो महाविद्यास्वरूपान्नातिरिच्यत इति स्वयं तेन निर्दिष्टम्—

सिद्धोत्तमोऽहमेवेह न भेदस्त्वावयोः क्वचित्।
एतद्वो ऋषयः प्रोक्तं सुस्पष्टमनुयुञ्जतया॥ इति।

एवं त्रैपुरदर्शनस्य संक्षिप्तोऽयं परिचयो विदुषां प्रमोदमादध्यादिति विरम्यते विस्तरात्।

———

# प्राचीन-भारते नियुद्धकलायाः स्वरूपम्

## ( प्रथमो भागः )

डा० श्री नीलकण्ठ पुरुषोत्तम जोशी

( सङ्ग्रहालयाध्यक्षः इतिहासप्राध्यापकश्च, वा० सं० वि० वि० वाराणसी । )

*भारतवर्षस्य व्यायामेतिहासे नियुद्धकलायाः स्थानं महत्त्वपूर्णमस्ति । नियुद्धस्यानुष्ठाने धनोपार्जनं स्वसंरक्षणञ्च लक्ष्यद्वयमासीत् । संरक्षणक्षमेयं विद्या आदिकालतो युद्धविद्याया अङ्गभूता संवृत्ता । अतो राजपुत्रादयोऽप्यस्या अध्ययनं कुर्वन्ति स्म, चतुष्षष्टिकलासु चास्याः सन्निवेशो जातः ।

जीविकोपार्जनार्थं नियुद्धस्याङ्गीकारं कुर्वाणा मल्ल-नटनामधारका जना नृपाश्रयभागिनोऽभूवन् । परं यथाग्रे निवेदयिष्यामः, समाजव्यवस्थायां तेषां स्थानं नोच्चतरमासीत् ।

शासकवर्गस्यापि नियुद्धे भूरितरा रुचिरासीत् । न केवलं राजानो मल्लानामाश्रयस्थानमभूवन्, अनल्पेनोपहारेण च तेषां युद्धवैदग्ध्यस्य समादरमकुर्वन्, किन्त्वनेके नृपतयो राजपुरुषाश्च—यथा वानराधिपः सुग्रीवः, मागधो जरासन्धः, तीर्थङ्कर-महावीरजनकस्सिद्धार्थः, सौराष्ट्राधिपतिः कुमारपालश्चेत्यादयो नृपतयः, कृष्णबलभद्रभीमसेनादयो राजपुरुषाश्च—मल्लविद्याविशारदा आसन् । अस्या विद्यायाः संस्कृत-प्राकृत-पालि-साहित्येषु दृश्यमाना उल्लेखाः, भारतीयकलाकृतिषु युद्ध्यमानानां मल्लानामङ्कनं लोककाव्येषु मल्लकथानां सन्निवेशश्च प्राचीनकालादागतं मल्लशास्त्रस्य महत्त्वं लोकमनोहारित्वञ्च सूचयन्ति ।

वैदिकसाहित्ये नियुद्धस्योल्लेखः प्रायेण नोपलभ्यते । जना मुष्टियुद्धं कुर्वन्ति स्म, परं तस्य विस्तृतवर्णनं न परिलक्ष्यते । तदनु दीघनिकायनामके बौद्धग्रन्थे[1]

---

* अत्र व्यवहृतानां हरिवंश-महाभारत-रामायण-विष्णुपुराणग्रन्थानां संस्करणानि गोरखपुरीय-गीतायन्त्रालये मुद्रितानि परिगृहीतानि सन्ति ।

१. दीघनिकायः ( पाली टेक्स्ट सोसाइटी, लन्दन १८६० ), १,१,१३, पृ० ६ ।

जातककथायाञ्च नियुद्धस्य वर्णनानि सन्ति। जैनानां समवायाङ्गसूत्रे[1] पुरुषाणां चतुष्षष्टिकलानां महिलानां द्विसप्ततिकलानाञ्च उल्लेखा विद्यन्ते। तत्राष्टषष्टितमायाः कलाया वर्णने दण्डयुद्धम्, मुष्टियुद्धम्, सूत्रखेलादिना सह युद्धनियुद्धं बाहुयुद्धञ्चोल्लिखितं वर्तते।

रामायण-महाभारतयोर्यत्र-तत्र नियुद्धस्य प्रचुरतराणि वर्णनानि विद्यन्ते। रामायणे राम-सुग्रीवयोर्युद्धम्[2], महाभारते भीम-जीमूतयो[3]र्भीम-जरासन्धयोश्च[4], हरिवंशे श्रीकृष्ण-बलभद्रयोः चाणूरमुष्टिकाभ्यां वर्णितं नियुद्धम्[5], तत्रैव चान्यानि बाहुयुद्धानि वर्णितानि सन्ति। तान्याश्रित्यैवेदं प्रस्तूयते विवेचनम्।

पूर्वोक्तसन्दर्भेषु कुत्रापि मल्लानां छात्रावस्थायाः शिक्षणक्रमस्य च वर्णनं नोपलभ्यते। कृतविद्यानां मल्लानां कलायाः प्रदर्शनानि बहुजनसङ्कुले 'समाज' इति प्रसिद्धे उत्सवे राजाज्ञयाऽभूवन्। एतादृशानां समाजानां वर्णनानि महाभारते[6] हरिवंशे,[7] विष्णुपुराणे[8],जैनानामुत्तराध्ययनसूत्रस्य टीकायाम्[9], अन्यत्रापि च दृष्टिपथमुपयान्ति।

सर्वप्रथमं तावद् भूमेरन्वेषणं संस्करणञ्च। कुरुराजस्य धृतराष्ट्रस्याज्ञया प्रवृत्तेन विदुरसाहाय्येनाचार्येण द्रोणेन समाजार्थे नगराद् बहिः समा, अवृक्षा, निर्गुल्मा, उदक्प्रस्रवणान्विता च भूमिर्मापिता; तदनु सुमुहूर्ते कृतमङ्गले तत्र प्रेक्षागारस्य रङ्गभूमेश्च निर्माणमाज्ञप्तम्[10]। हरिवंशे[11] वर्णितमस्ति यत् कंसनिर्मितं प्रेक्षागारं 'पूर्वाभि-

---

१. कस्तूरमलभाटियामहोदयेन नागरीप्रचारिणीपत्रिकायां (वर्ष ६४, सं० १ पृ० ४६) प्रकाशिते स्वलेखे उद्धृतम्—समवायाङ्गसूत्रम्, समवायः ७२।

२. वाल्मीकीय-रामायणम्, युद्ध०, ४०,१३–२८।

३. महाभारतम्, विराट्०, १३, १४–३६।

४. महाभारतम्, सभा०, २३, ४–२६।

५. हरिवंशः, विष्णु०. ३०,३१–३६।

६. महाभारतम्, आदि०, अध्यायः १३३–३४; सभा०, अ० २१, २३, २४।

७. हरिवंशः, विष्णु०, अध्यायः २८, २९, ३०।

८. विष्णुपुराणम्, पञ्चमोंऽशः, अध्यायः २०।

९. उत्तराध्ययनसूत्रम्, अध्ययनम् ४, सूत्रम् १, पृ० २५० (टीकाभागः)।

१०. महाभारतम्, आदि०, १३३, ९–११।

११. हरिवंशः, विष्णु०, २८, ९–१५; २९, १–२०।

मुखं स्वायतं सुप्रतिष्ठितमुत्तमागारयुक्ताभिर्वलभीभिर्विभूषितं सञ्चारपथसङ्कुलं सार्गल-द्वारवेदिकायुक्तं सुतल्पोत्तमशोभितं नयनानन्ददायकञ्चासीत्। रत्नज्वालाकुलकाञ्चन-चित्राणि, जवनिकाः, विचित्रकुथावृता भूमिः, अन्यानि पटास्तरणानि च महारङ्गस्यास्य शोभामवर्धयन्। स्त्रीणां गणिकानां च कृते जवनिकावृताः प्रेक्षागारा विनिर्मिता आसन्। श्रेणीनां गणानाञ्च अचलोपमा मञ्चाः स्व-कर्मद्रव्ययुक्ताभिः पताकाभिः समलङ्कृता आसन्। अत्र 'काष्ठसञ्चयबन्धनाः' इति पदेन[1] तादृशानामासनानां बोधो जायते यथा साम्प्रतिके 'सरकस'नाम्ना प्रसिद्धे उत्सवे 'गेलेरी'पदवाच्यानि काष्ठनिर्मिता-न्यासनानि दृश्यन्ते। सपरिवारस्य नृपस्य कृते मेरुशृङ्गसमप्रभं पूर्वाभिमुखं रुक्मपत्र-निभस्तम्भयुक्तं माल्यदाम्ना सुशोभितं सुविहितमासीदुत्तुङ्गतरं स्थानम्।

तस्मिन्नेव रङ्गवाटे कंसाज्ञया गोमयचूर्ण-( करीष )-राशयः, सुनिखाताः पानकुम्भाः, उदभारसहाः काञ्चनघटाः, फलावदंशपूर्णाश्चाङ्गेर्यः, बलयः, कषायकुम्भा-श्चोपकल्पिता आसन्[2]। नातिदूरे रङ्गस्य मल्लानां मध्यस्थानाञ्च कृते स्थानानि निर्मितान्यासन्। राजगृहे जरासन्धपुरोहितो युद्धारम्भकाले स्वनृपं रोचनामाल्यमङ्ग-लादिभिः सह काश्चिदोषधीरदात्[3]। एतादृशीनामोषधीनामुपयोगः प्रदर्शनकालेऽपि सम्भाव्यते।

## नियुद्धनियमाः प्राश्निकानां कर्तव्यानि च

नियुद्धे मध्यस्था नियुद्धप्राश्निकमर्यादापालकादिशब्देन सम्बोध्यन्ते स्म। मल्लशास्त्रविदो निष्पक्षपातिन एते जना युयुत्सूनां मल्लानां चयने दक्षा आसन्। मल्लयुग्मविनिश्चये निम्नाङ्कितानां गुणानां विचारोऽप्यावश्यक आसीत्—

(१) मल्लानां क्रियाबल-तुल्यत्वम्। संयमस्थैर्यशौर्यव्यायामसत्कार्यबलादि-ष्वपि तेषां तुल्यत्वमपेक्षितमासीत्[4]।

(२) वयोमर्यादायाः शरीरयष्ट्याश्च समानत्वम्[5]।

---

१. हरिवंशः, विष्णु०, २६, १२।
२. हरिवंशः, विष्णु०, २८, १३–१४।
३. महाभारतम्, सभा०, २३, ४।
४. हरिवंशः, विष्णु०, ३०, १२।
५. हरिवंशः, विष्णु०, ३०, १५।

प्राश्निकानामाध्यक्षये निम्नलिखितानां नियमानां पालनमावश्यकमासीत्—

(१) मल्लयुद्धे कस्यापि शस्त्रस्योपयोगो न कार्यः[१]।

(२) निपातानन्तरं बाहुयुद्धविशारदेन मल्लेन किञ्चिदपि न प्रतिविधेयम्[२]। रङ्गसिद्धिर्निपातादेव सुप्रतिष्ठिता मन्यते स्म।

(३) अवैरोऽयं प्रसङ्गः। नियुद्धे निहते सति स्वर्गप्राप्तिर्न भवति, अतस्तत्र शत्रोः प्राणहरणमवैधं परिगणितम्। श्रीकृष्णेन कंससभायां स्पष्टीकृतोऽयं विषयः[३]।

(४) नियुद्धे श्रमे सति मल्लाः तोयेन करीषेण वा स्वश्रमपरिहारं कर्तुं शक्नुवन्ति स्म। सोऽयं व्यापारः 'तोयधर्म' 'करीषधर्मा' दिनाम्ना प्रथित आसीत[४]।

(५) मध्यस्थानां निर्णयोऽनुल्लङ्घ्य आसीत्।

## नियुद्धप्रदर्शनस्य प्रारम्भः

राज्ञा समुद्घोषिते पूर्वनियोजिते वासरे नानाजनाकीर्णो जनौघप्रतिनादिते समाजवाट इमानि प्रदर्शनान्यभूवन्। तूर्यनिनादिते तस्मिन् रङ्गे राज्ञः प्रवेशानन्तरं मल्लाः प्रविशन्ति स्म। आदौ तत्र बलिकर्मविधिः। कुरुराजधान्यां सोऽयं विधिः शुक्लाम्बरधरेण शुक्लमाल्यानुलेपनेन वृद्धेनाचार्येण द्रोणेन सम्पादितः। मन्त्रज्ञैर्ब्राह्मणैर्मङ्गलं कारितम्[५]। भीमजरासन्ध-युद्ध-समये भीमस्य कृते श्रीकृष्णेन जरासन्धस्य च कृते तत्पुरोहितेन मङ्गलं विहितम्[६]।

युद्धारम्भे मल्लाः करग्रहणपूर्वकं परस्पराभिवन्दनं कुर्वन्ति स्म। अधुना एतत्कर्म 'सलामी'पदेनावगम्यते। कार्यस्यास्योल्लेखो महर्षिणा पाणिनिना 'मल्लो मल्ल-

१. हरिवंशः, विष्णु०, ३०, १२।
२. हरिवंशः, विष्णु०, ३०, १६; ३०, २६।
३. हरिवंशः, विष्णु०, ३०, १६–३०।
४. हरिवंशः, विष्णु०, ३०, १३; ३०, २१।
५. महाभारतम्, आदि०, १३३, २१।
६. महाभारतम्, सभा०, २३, ५; २३, ६।

माह्वयते' इति सूत्रे कृतोऽस्ति[१] । वाराणस्यां राजघट्टनामकात् स्थानाल्लब्धे मृत्क्रीडनके मल्लानां करग्रहणमङ्कितमस्ति[२] । क्रीडनकमिदमनुमानतो द्विसहस्रसंवत्सरेभ्यः प्राचीनं विद्यते ।

## मल्लयुद्धप्रदर्शनम्

अस्मिन्नवसरे मल्ला विविधैः प्रकारैरात्मनः कौशलं प्रकाशयन्ति स्म । विविधानां नियुद्धकार्यव्यापाराणां नामसूची सङ्कलिता वर्तते, परमेतेषां पदानामर्थविनिश्चये क्वचित्क्वचित् टीकानां साहाय्ये सत्यपि सन्देहबाहुल्यं विद्यते। इतोऽपि कठिनतर एतेषां शब्दानामाधुनिकमल्लशास्त्रदृष्ट्या पर्यायविनिश्चयः । तथापि सम्भाव्यते यत् कर्तुमिदं प्रभविष्यति कोऽपि मल्लशास्त्रविद् बुधवर्यः ।

सामान्यत एतादृशाः समाजा राजाज्ञया भवन्ति स्म । तत्र पूर्वनियोजिता योद्धारोऽनाहूतानवागताश्च स्वकौशलं प्रदर्शयितुं पारयन्ते स्म । महाभारते द्रोणसञ्चालिते समाजे स्वपाटवप्रदर्शनकामः सूतपुत्रः कर्णोऽर्जुनेन पृष्टे सति 'रङ्गोऽयं सर्वसामान्यः' इत्युत्तरेण स्वकीयं रङ्गप्रवेशौचित्यं प्रदर्शयामास[३] ।

समाजस्यास्य प्रारम्भः सूर्योदयाद् भवति स्म[४] ।

## मल्लानां वेषः

विष्णुधर्मोत्तर-पुराणे मल्लपरिच्छदस्य वर्णनं विद्यते । एते पीनगात्राः पीनग्रीवशिरोरुहा आसन्[५] । जैनमहापुराणे कंसरङ्गं प्रविशतोः कृष्णबलरामयोः वेषवर्णनं सप्तभिः श्लोकैः कृतमस्ति । सहजमसृणगात्रस्य, घनधृतपरिधानस्य, वज्रसारास्थिबन्धस्य, कठिनपृथुलवक्षसो नन्दसूनोः परिघविधायिनौ भुजौ सिन्दूररञ्जितावास्ताम्[६] । प्राचीनासु कलाकृतिषु कक्ष्याधारकाश्चल्लणधारकाश्च मल्लाः

---

१. वासुदेवशरणअग्रवालः—पाणिनिकालीनभारतवर्ष, पृ० १६२ ।
२. काशीस्थहिन्दूविश्वविद्यालयीय-भारतकलाभवनस्थं मृत्क्रीडनकम्, संख्या ४८२७ ।
३. महाभारतम्, आदि०, १३५, १६ ।
४. विष्णुपुराणम्, ५, २०; ५, २४ ।
५. विष्णुधर्मोत्तरपुराणम्, ३, ४२; ३, ४५–४६ ।
६, जैनमहापुराणम्, २, ७०; २, ८८–६४ ।

दृश्यन्ते। लक्ष्मणपुर-सङ्ग्रहालये एकस्मिन् शिलापट्टे भीमजरासन्धयोर्युद्धदृश्यमुत्कीर्णमस्ति। तत्र चल्लणाधारकयोस्तयोः शिथिलौ सुकल्पितौ केशसम्भारावि्वलोक्येते[१]।

## मल्लानां राजाश्रयः

हरिवंशे कृष्णबलभद्रयोर्वधं काङ्क्षमाणेन कंसेन चाणूरमुष्टिकप्रमुखान् स्वमल्लानुपकृतिस्मरणपूर्वकं यदुक्तं तेन राजाश्रयप्रकारस्य बोधो भवति[२]।

मल्ला राजप्रवेशानन्तरं सभाप्रवेशाधिकारभागिनो भवन्ति स्मेति संभाव्यते। यतो हि कंसे सिंहासनमधिरूढे सति न केवलं श्रीकृष्णादिना, अपि त्वन्यैः राजमल्लैश्चापि रङ्गप्रवेशः कृत आसीत्[३]।

मत्स्याधिपस्य विराटस्य सभायामपि बहवो मल्ला आसन्। बहिर्देशादागतेन जीमूतेन सर्वेषां तेषां पराभवे कृते सति सूदवेषधारिणा भीमसेनेन राजाज्ञया नियुद्धे जीमूतो निहतः[४]।

'उत्तराध्ययनसूत्र'टीकायामुपलभ्यमानायामट्टनमल्लकथायां शूर्पारकाधिपेन सिंहगिरिणा संपादितमट्टनपराभवक्षमस्य मात्स्यिकमल्लस्यान्वेषणस्याश्रयदानस्यापि च वर्णनमवलोकयितुं शक्यते[५]।

## मल्लानां सामाजिकी स्थितिः

मनुना स्वस्मृतौ मल्लानां झल्लानाञ्च हीनवर्णत्वं सूचितमस्ति[६]। अधुनापि वङ्गदेशे 'मलो-झलो' इति पदवाच्या जनाः शूद्रा ज्ञायन्ते। जैनकल्पसूत्रे मल्लानां गणना नट-नर्तक-मौष्टिकादिभिस्सह निम्नवर्ग एव कृता[७]। महाभारते मोक्षधर्मे मद्यमांस-

---

१. लक्ष्मणपुरसङ्ग्रहालयीया मूर्तिः, संख्या-एच० ८८।

२. हरिवंशः, विष्णु०, २८, २०–२१।

३ हरिवंशः, विष्णु०, २६, २०।

४. महाभारतम्, विराट्० १३, १४–३६।

५. उत्तराध्ययनसूत्रम्, अध्ययनम् ४, सूत्रम् १, टीकाभागः पृ० २५०।

६. मनुस्मृतिः, १०, २२। काणे-पाण्डुरङ्गवामनः, हिस्ट्री ऑफ् धर्मशास्त्र, खण्डम् २, भागः १, पृ० ८२, ९०।

७. श्रमण भगवान् महावीर, पृ० २००।

लोहचर्म-विक्रयोपजीवनैः सह रङ्गावतरणमपि विगर्हितं कर्मेति ख्यापितम्[1]। विष्णुपुराणे कैवर्त-कुण्डाशी-गरदादिभिः सह रङ्गोपजीविनोऽपि निरयगतिभाजो भवन्तीति सूचितम्[2]।

मल्लविद्यायाः प्रसिद्धस्थानानि

प्राचीने साहित्ये मल्लप्रसिद्धानां देशानां विषये केचिदुल्लेखा उपलभ्यन्ते। कृष्णरिपुश्चाणूर आन्ध्रदेशीयो मल्ल आसीत्[3]। अन्यश्च मुष्टिकः कारुषदेशाद् (विहारप्रान्तस्य शाहवाद-विषयः) आगत आसीत्[4]। महाभारते इदमपि वर्णितमस्ति यद् यवनदेशीयाः (भारतवर्षस्योत्तरपश्चिमसीमान्ते स्थिताः 'ग्रीस'-निवासिनः), काम्बोजदेशीयाः (सिन्धुनदस्य पश्चिमोत्तरवर्तिभूभागनिवासिनः), मथुरादेशीयाश्च जना नियुद्धकुशला इति[5]। उपरिनिर्दिष्टाट्टनमल्लकथानुरोधेन उज्जयिनी, शूर्पारकः (सोपारा), भरुकच्छ (भडौच) इति स्थानान्यपि मल्लविद्यायाः कृते सुप्रसिद्धान्यासन्निति सूचयितुं शक्यते।

एतत्स्वरूपमासीत् संक्षेपतो नियुद्धविद्यायाः प्रारम्भिके काले। विक्रमसंवत्सरस्यैकादशे शतके निर्मिते 'मानसोल्लास'नामके ग्रन्थे, अप्रकाशिते 'मल्लपुराणे' अन्यत्रापि च शास्त्रस्यास्य विस्तारो वर्तते। तस्य विचारमग्रे प्रसाधयिष्यामः।

———

१. महाभारतम्, शान्तिपर्वणि, मोक्षधर्म० २६४, ४–६।
२. विष्णुपुराणम्, २; ६, २१।
३. हरिवंशः, विष्णु०, ३१, ८।
४. हरिवंशः, विष्णु०, ३१, २४।
५. महाभारतम्, शान्ति०, राजधर्म०, १०१, ५।

# क्षयमास-विमर्शः

श्रीगणपतिदेवशास्त्री पञ्चाङ्गविभागाध्यक्षः, वा० सं० वि० वि० वाराणसी ।

पञ्चाशीत्यधिकाष्टादशशततमे शकाब्दे पतिष्यत्क्षयमासविचारः प्रस्तूयते ।

असंक्रान्तिमासोऽधिमासः स्फुटः स्याद्
द्विसंक्रान्तिमासः क्षयाख्यः कदाचित् ।
क्षयः कार्त्तिकादित्रये नान्यतः स्या-
त्तदा वर्षमध्येऽधिमासद्वयं च ॥

इति सिद्धान्तशिरोमणिवचनात् संक्रातिरहितश्चान्द्रमासोऽधिमासः, संक्रान्तिद्वयविशिष्टचान्द्रमासश्च क्षयमासो भवति । एवं यस्मिन्वर्षे क्षयमासस्तदानीं क्षयमासात्पूर्वमेकोऽधिकमासस्तदूर्ध्वं चापरोऽधिमासो भवतीत्यवगम्यते । तथैव —

मीनादिस्थो रविर्येषामारम्भप्रथमे क्षणे ।
भवेत्तेऽब्दे चान्द्रमासाश्चैत्राद्या द्वादश स्मृताः ॥

इति व्यासवचनानुसारतो मीनस्थरव्यारब्धप्रथमक्षणो मासश्चैत्रः, मेषस्थरव्यारब्धप्रथमक्षणो मासो वैशाखमास इत्यादिमासनामव्यवस्था साम्प्रतं प्रचलति । अथोक्तशकाब्दे दृक्सिद्धगणितानुसारेण अमान्तमानेनाश्विनामावास्यायां तुलार्कः । ततोऽसंक्रान्तः कार्तिकः । असंक्रान्तामातः परं प्रतिपदि वृश्चिकार्कः । ततोऽग्रिमामायामेव धनुरर्कसत्त्वादयं संक्रान्तिद्वयविशिष्टः क्षयमासो भवति । तदूर्ध्वममास्वेव क्रमशो मकरकुम्भमीनसंक्रान्तयः । तदुत्तरवर्त्यमातः परं प्रतिपदि मेषार्कसत्त्वान्मीनस्थरव्यारब्धप्रथमक्षणश्चैत्रोऽधिकमासो भवतीत्यस्मिन्वर्षेऽधिमासद्वयम्, एकः क्षयमासश्च भवेत् ।

अस्यां स्थितौ—

मासद्वयेऽब्दमध्ये तु संक्रान्तिर्न यदा भवेत् ।
प्राकृतस्तत्र पूर्वः स्यादधिमासस्तथोत्तरः ॥

इति जाबालिमहर्षिवचनेन क्षयमासात्पूर्वभाविनोऽधिमासस्य प्राकृतत्वमतिदिश्यते। अत्र प्रकृतिः स्वभावस्त्रिंशद्दिनरूपस्तद्युक्तः, अनधिकः, शुद्धः, कर्मार्हं इति यावत्। तथैव—

घटकन्यागते सूर्ये वृश्चिके वाथ धन्विनि।
मकरे वाथ कुम्भे वा नाधिमासो विधीयते॥

इति ज्योतिस्सिद्धान्तवचनेन क्षयमासात्प्राक्तनाधिमासस्याधिमासत्वं षष्टिदिनात्मककालाधिक्यं वा निषिध्यते। अस्यायमर्थः—वृश्चिकादिषु चतुर्षु मासेषु यदा मलमासः प्राप्नोति, तदा सूर्ये तुलाकन्ययोर्वर्तमाने सत्यसंक्रान्तोऽपि नाधिमासः। तदुक्तं ब्रह्मसिद्धान्ते—"चैत्रादर्वाङ् नाधिमासः परतस्त्वधिको भवेत्।" अस्यार्थः—चैत्रादारभ्य यौ कौचिन्मासावसंक्रान्तौ, तयोरर्वाचीनो नाधिमासः, परतस्तु भवत्यधिमास इति। एवं बार्हस्पत्यज्योतिर्ग्रन्थे—

यस्मिन् मासे न संक्रान्तिः संक्रान्तिद्वयमेव वा।
संसर्पांहस्पती मासावधिमासश्च निन्दिताः॥ इति।

अत्र संसर्पांहस्पतिशब्दौ कालमाधवे एवं व्याख्यातौ—"असंक्रान्तत्वेनेतराधिकमासवत्कर्मानर्हतायां प्राप्तायामपि तदपवादत्वेन कर्मार्हः सन् सम्यक् सर्पतीति संसर्पः, तथैकमासग्रासित्वादंहसः पापस्य पतिरि"ति।

अथ पूर्वोक्तोदाहरणे—

यां तिथिं समनुप्राप्य तुलां गच्छति भास्करः।
तयैव सर्वसंक्रान्तिर्यावन्मेषं न गच्छति॥

इत्यार्षवचनानुसारमसंक्रान्तकार्तिकामाया वृश्चिकार्कसम्बन्धयोग्यतयाऽसंक्रान्तकार्तिकस्य शुद्धमासत्वेन तत्रैव कार्तिककृत्यमनुष्ठेयमिति धर्मशास्त्रसम्मतोऽयं पक्षः प्रतिभाति। अन्यथा क्षयमासप्राक्तनाधिमासस्य प्राकृतत्वकथनमनुपपन्नं स्यात्। तदुत्तरवर्तिगणितागतशुद्धकार्तिकस्य पूर्वोक्तवचनेन वृश्चिकस्थरव्यारब्धप्रथमक्षणावत्त्वेन तस्य मार्गशीर्षत्वं संक्रान्तिद्वयविशिष्टत्वेन च क्षयमासत्वं सम्पद्यते।

यत्तु प्राचीनतिथिपत्रेषु संसर्पस्य षष्टिदिनात्मत्वेनोल्लेखः क्षयमासस्य च सर्वथा विलोप एव कृत उपलभ्यत इति। तदसत्; संसर्पे कालाधिक्यनिषेधात्, सङ्कल्पे च क्षयमासस्य तत्तन्मासत्वेनोल्लेखस्य विधानात्। अतस्तिथिपत्रे क्षयमासोल्लेख

आवश्यक एव प्रतीयते। किञ्च—क्षयसंज्ञाया लोपप्रवृत्तिनिमित्तकत्वे मार्गशीर्षादेर्लोपे तन्निमित्तकश्राद्धादिकृत्यानां तस्मिन्वर्षे लोपप्रसङ्गः स्यात्। अत उक्तसंवत्सरस्य दृक्सिद्धपञ्चाङ्गेऽसंक्रान्तकार्तिकस्य शुद्धकार्तिकत्वेन तदुत्तरशुद्धकार्तिकस्य च मार्गशीर्षक्षयत्वेनोल्लेखो युक्तः प्रतिभाति। तदनुसारत एव श्रीभास्कराचार्यप्रणीतसिद्धान्तशिरोमणेर्गणिताध्यायस्य ग्रहलाघवकारश्रीगणेशदैवज्ञप्रपौत्र-श्रीगणेशविरचितायां पुण्याख्यपत्तनस्थानन्दाश्रममुद्रणालये मुद्रितायां वासनाभाष्यशिरोमणिप्रकाशाभिधटीकायां क्षयपूर्वभाव्यधिमासस्य शुद्धमासवदुल्लेखं कृत्वा तदुत्तरक्षयावधिकावान्तरमासानां तत्तन्मासत्वेनोल्लेखः कृत उपलभ्यते। एतेनायं पक्षः प्राचीनैरप्यादृत आसीदित्यनुमीयते।

अथ संसर्पे शुद्धमासत्वारोपः कथमावश्यको भवतीति प्रदर्श्यते। कल्प्यताम् अमान्तमानेन भाद्रपददर्शे कन्यार्कः, तत एकमसंक्रान्तमासमतिक्रम्याश्विनशुक्लप्रतिपदि तुलार्कसत्त्वादयमसंक्रान्त आश्विनः, तदुत्तरदर्श एव वृश्चिकार्कसत्त्वादयं संक्रान्तिद्वयविशिष्टः कार्तिकः क्षयमासो भवति। एवं सत्यत्र तुलास्थरव्यारब्धप्रथमक्षणवत्त्वाभावेन क्षयमासस्य कार्तिकत्वं नोपपद्येत। अतः क्षयपूर्ववर्तिसंसर्पसंज्ञकाधिमासस्य प्राकृतत्वकथनान्यथानुपपत्त्या तुलार्कात्प्राक्तनामायास्तुलासम्बन्धयोग्यता कल्पनीया भवति। तेनासंक्रान्ताश्विनस्य शुद्धमासत्वेन तदुत्तरशुद्धाश्विनस्य तुलास्थरव्यारब्धप्रथमक्षणवत्त्वेन कार्तिकत्वं सम्पद्यते। अधिकाश्विनस्य शुद्धतया तत्रैव नवरात्रादिदीपावल्यन्तमाश्विनकृत्यम्, तदुत्तरमासे च कार्तिककृत्यमनुष्ठेयं भवति। अतोऽत्र कार्तिकस्य नाममात्रक्षयः, सङ्कल्पे केवलं स उल्लेख्यो भवति। सर्वमिदं संसर्पे शुद्धमासत्वकल्पनयैव सङ्गच्छते।

यत्तु—

यस्मिन्मासे न संक्रान्तिः संक्रान्तिद्वयमेव वा।
संसर्पाहस्पती मासावधिमासश्च निन्दिताः॥

इति वचनेन संसर्पाहस्पत्योर्निन्द्यत्वमुक्तम्, यच्च—

कार्तिकादिषु मासेषु यदि स्यातां मलिम्लुचौ।
सर्वकर्महरः प्रोक्तः पूर्वस्तत्र मलिम्लुचः॥

इति स्मृतिवचनेन संसर्पस्य सर्वकर्महरत्वं प्रतिपादितमिति, तद्येषां मासविशेषसापेक्षाणां नवरात्रप्रत्याब्दिकादिकृत्यानां शुद्धमासे कर्तव्यता सम्भवति, तेषामेवानुष्ठानायाधिमासस्योक्तवचनद्वयेन निन्द्यत्वं सर्वकर्महरत्वं चातिदिष्टम्। संसर्पमासे तु भागद्वयाभावात्तत्र पूर्वोक्तकृत्याननुष्ठाने तल्लोप एव प्रसज्येत। अतः संसर्पे पूर्वोक्तकृत्यानुष्ठाने न कोऽपि प्रत्यवायः।

एवं—

तिथ्यर्द्धे प्रथमे पूर्वो द्वितीयेऽर्धे तथोत्तरः।
मासाविति बुधैश्चिन्त्यौ क्षयमासस्य मध्यगौ ॥

इति वचनेन क्षयमासे या मासद्वयकल्पना कृता, सा क्षयमासजातवर्धापनोत्सवस्य तन्मृतप्रत्याब्दिकादेश्च मासनिर्णयार्थं केवलमुपयुज्यते, न तु सर्वत्र। अन्यथा कदाचित्तिथ्यर्द्धस्य रात्र्यादिनिषिद्धकालसम्पाते मार्गशीर्षादिनिमित्तकाष्टकादिश्राद्धविलोपप्रसक्तिः स्यात्। अत एव हेमाद्रि-कालमाधवोद्धृतं 'तिथ्यर्द्धे प्रथमे पूर्व' इत्यादि पूर्वोक्तवचनं क्षयमासमृतजातयोरग्रिमवर्षे कस्मिन्मासेऽनुक्रमेणाब्दिकश्राद्धं वर्धापनोत्सवश्च कार्यं इति सन्देहे तद्व्यवस्थापकमेव ज्ञेयम्। किञ्च क्षयमासोपेतसंवत्सरे द्वयोरसंक्रान्तमासयोः परित्यागेन ससंक्रान्तैकादशमासानामवशिष्टत्वात् "द्वादशमासाः संवत्सरः, अस्ति त्रयोदशमास इत्याहुः" इति ससंक्रान्तमासानुद्दिश्य प्रवृत्तश्रुतेर्यो विरोधः समुत्पद्यते, तत्परिहारायापि द्विसंक्रान्तियुक्तक्षयमासे मासद्वयपरिगणना समुचितैव।

इदमत्रानुसन्धेयम्—'यां तिथिं समनुप्राप्ये'त्यादि पूर्वोक्तवचनं क्षयमासावसरे संसर्पस्य शुद्धत्वसम्पादनार्थमेव प्रवर्तते। क्षयमासोत्तरमप्युक्तवचनप्रवृत्तिः स्वीक्रियेत चेदग्रे प्रदर्शितमकरन्दीयपौषक्षयोदाहरणे प्रतिपदस्तुलार्ककालत्वेनामासज्ञातानामपि मकरकुम्भमीनसंक्रमणानां स्वाभाविकतदुत्तरप्रतिपत्स्थानत्वेन पौषस्य क्षयत्वं क्षयोत्तरचैत्रस्य चाधिमासत्वमेव व्याहन्येतेति। अथवा क्षयोत्तरभानुलङ्घितमासावधिसंक्रमणानां दर्शसम्बन्धस्य स्वतःसिद्धत्वात्तत्रोक्तवचनप्रवृत्तिरनावश्यकैव भवति। विषयोऽयमग्रे सविस्तरं प्रपञ्चितोऽस्ति।

यत्तु धर्मसिन्धौ "यथा कार्तिकोऽधिमासस्तदुत्तरो मासो वृश्चिकधनुःसंक्रान्तियुक्तत्वात्क्षयसंज्ञकस्तत्र कार्तिकमासस्थं प्रत्याब्दिकं पूर्वेऽधिमासे उत्तरे क्षयमासे च

कार्यम्" इत्युक्तम् । तदयुक्तम्; "सांवत्सरं न वर्धेत" इति वचनेन प्रत्याब्दिकश्राद्धावृत्तेः प्रतिषिद्धत्वात् । यच्च तत्रैव क्षयाद्व्यवहितपूर्वाधिमासगतं श्राद्धं मले शुद्धे चावृत्त्या द्विवारं कर्तव्यमित्युक्तम् । तदपि न युक्तम्; संसर्पमासे कालाधिक्यनिषेधात् । क्षयपूर्वभाव्यधिमासे कालाधिक्यनिषेधास्वीकारे तु पूर्वोक्तक्षयकार्तिकोदाहरणे शुद्धाश्विनस्यैव कार्तिकक्षयमासत्वेन तत्र कार्तिककृत्यविलोपापत्तिः स्यात् । स्वीकृते तु तत्र कालाधिक्यनिषेधे शुद्धाश्विनस्य कार्तिकत्वेन कार्तिकस्य नाममात्रक्षयो भवतीत्यादि सर्वं पूर्वं प्रतिपादितमेवास्ति ।

अथ—

एक एव यदा मासः संक्रान्तिद्वयसंयुतः ।
मासद्वयगतं श्राद्धं मलमासेऽपि शस्यते ॥

इति वचनस्यैकमेव श्राद्धमधिमासे क्षयमासे चावृत्त्या कार्यमिति नार्थः । निर्णयसिन्धुकारैः "मासद्वयगतं पूर्वासंक्रान्तगतं ( न तु केवलमव्यवहितपूर्वासंक्रान्तगतम् ) क्षयगतं च, मलमासे—क्षयमासे, अपिशब्दात्तत्पूर्वाधिमासे चे"ति पूर्वोक्तवचनाभिप्रायस्य प्रदर्शितत्वादधिमासस्य मलत्वेऽपि क्षयपूर्वाधिमासस्य शुद्धत्वात्तद्गतं श्राद्धं तत्रैव कार्यं तथा यत्संज्ञको मृतमासस्तद्गतं श्राद्धं क्षयेऽपि कार्यमित्येवोक्तवचनाभिप्रायः प्रतिभाति । तथा चैतदनुकूलं दीपिकावचनम्—

शुद्धे मासि मृतस्य वार्षिकमपि श्राद्धं द्वितीयादिकं
नैव स्यान्मलमासके वितनुयान्मासे क्षयाख्येऽपि तत् ।
तत्प्राक्संज्ञ्यधिमासको यदि भवेत्तत्रत्यसांवत्सरं
तस्मिन् शुद्धतया क्षयेऽपि वचनात्कुर्याद् द्वयोः कोविदः ॥

अत्र तच्छब्देन वार्षिकश्राद्धस्य परामर्शात्तत्क्षयेऽपि कुर्यादित्यर्थः ।

अथ मृताहश्राद्धस्य मासद्वये विधायकानि वचनानि परस्परविरुद्धानि न सन्तीति प्रदर्श्यते । "वर्षे वर्षे" इत्यादिवचनानि प्रथमाब्दिकं मलमाससम्भवे तत्रैव कार्यम्, द्वितीयाब्दिकं तु शुद्धमासे एवेत्येवं व्यवस्थया मासद्वयविधायकानि । "प्रतिसंवत्सरे श्राद्धे नाधिमासं विवर्जयेत्" इत्यादीनि मलमासमृतप्रत्याब्दिकविषयाणि । "श्राद्धीयाहनि सम्प्राप्ते" इत्यादिश्राद्धद्वयविधायकानि मासिकश्राद्धपराणि, "पितृकार्याणि चोभयोः" इत्यादीनि दर्शश्राद्धपराणि । "मलमासे न कर्तव्यं व्याघ्रस्य वचनं यथा", "अन्येषा-

मुत्तरत्र तु" इत्यादीनि शुद्धमासमृतद्वितीयाद्याब्दिकविषयाणीति विषयभेदात्सिद्धः सर्वेषां वचनानामविरोध इति।

अथोक्तशकाब्दे मकरन्दीयगणितानुसारेणामान्तमानतो भाद्रपददर्शे कन्यार्कः, तत ऊर्ध्वमसंक्रान्तमासमतीत्य तदुत्तरमासद्वयप्रतिपदोः क्रमेण तुलावृश्चिकार्कौ, तदुत्तरमेकस्मिन्नेव मासे शुक्लप्रतिपदि धनुस्संक्रान्तिः, दर्शे च मकरसंक्रान्तिसत्त्वादयं संक्रान्तिद्वयविशिष्टः क्षयमासो भवति। तदुत्तरमासद्वयदर्शयोः क्रमेण कुम्भमीनार्कौ, ततः परमेकमसंक्रान्तमासमतिक्रम्योत्तरस्यां प्रतिपदि मेषार्कः। एवं सत्येकस्मिन्नेव वर्षे द्वावसंक्रान्तमासौ, एकश्च द्विसंक्रान्तमासो भवति। अस्यां स्थितौ क्षयमासात्पूर्वभाविनोऽसंक्रान्तमासस्य प्राकृतत्वातिदेशो व्यर्थो न भवेदतः प्रतिपत्सञ्जाततुलार्कप्राक्तनामाया अपि तुलार्कसम्बन्धयोग्यतायाः स्वीकृतत्वेनासंक्रान्ताश्विनस्य शुद्धमासत्वं सम्पद्यते। तेनास्मिन्नेव मासे नवरात्रादिदीपावल्यन्तमाश्विनकृत्यमनुष्ठेयं भवति। ततः शुद्धाश्विनस्य तुलास्थरव्यारब्धप्रथमक्षणवत्त्वेन कार्तिकत्वम्, कार्तिकामाया वृश्चिकसम्बन्धयोग्यतया तदुत्तरमासस्य वृश्चिकस्थरव्यारब्धप्रथमक्षणवत्त्वेन मार्गशीर्षत्वम्, मार्गशीर्षामाया धनुःसम्बन्धयोग्यतया तदुत्तरमासस्य धनुःस्थरव्यारब्धप्रथमक्षणवत्त्वेन पौषत्वम्, तदीयामायामेव मकरसंक्रान्तिसत्त्वात्संक्रान्तिद्वयविशिष्टस्य तस्य क्षयत्वं च भवति। एवं मकरन्दगणितेनास्मिन्वर्षे पौषस्य क्षयः, दृश्यगणनानुसारेण च मार्गशीर्षक्षयो भवतीति ज्ञायते।

अथ मेषादिराशीनां चैत्रादिमाससंज्ञां प्रति प्रयोजकत्वेऽन्यज्ज्योतिःशास्त्रवचनम्—

मेषादिस्थे सवितरि यो यो मासः प्रपूर्यते चान्द्रः।
चैत्राद्यः स ज्ञेयः पूर्तिद्वित्वेऽधिमासोऽन्त्यः॥ इति।

अस्यार्थः—मेषस्थे सूर्येऽवसितश्चान्द्रमासश्चैत्रः, एवमग्रेऽपि ज्ञेयम्। तथैवैकराशिस्थिते रवौ यदा दर्शद्वयं पूर्यते, तदोत्तरदर्शावसानको मासोऽधिमासः, न तु पूर्वदर्शावसानकः। यथा कल्प्यताम्—आषाढदर्शे कर्कसंक्रान्तिः, ततः श्रावणशुक्ले प्रतिपदि सिंहसंक्रान्तिस्तदोत्तरदर्शस्य कर्कटरवाववसितत्वात्पूर्वाषाढवदस्यासंक्रान्तमासस्याप्याषाढत्वं भवति। किन्तु 'मीनादिस्थो रविरि'त्यादिपूर्वोक्तवचनेन कर्कसंक्रान्तियुक्तदर्शतः परं चान्द्रमासद्वयस्य कर्कटरव्यारब्धप्रथमक्षणवत्त्वेन श्रावणोऽधि-

मासो भवति। एतेन पूर्वोक्तवचनद्वयस्य ससंक्रान्तमासनामकरणे वैमत्यं न भवति। केवलमसंक्रान्तमासस्य संक्रान्तिद्वयविशिष्टमासस्य च नामनि तद्भेदो भवतीत्यवबुद्ध्यते।

इदमप्यत्रावधेयम्—यन्मीनादिस्थ इत्यादिवचनेन यत्संज्ञकोऽधिमासः क्षयमासो वा भवति, तत्पूर्वतनोऽधिमासः क्षयमासो वा मेषादिस्थे सवितरीत्यादिवचनेन भवति तथा मीनादिस्थ इत्यादिवचनपक्षेऽसंक्रान्तमासपूर्वभागो मेषादिस्थे सवितरीत्यादिवचनपक्षे तदुत्तरभागोऽधिमाससंज्ञो भवतीति।

अद्यत्वे मीनादिस्थो रविरित्यादिवचनानुसारत एव मासनामव्यवस्था प्रचलतीति यत्पूर्वमुक्तं तत्रोदाहरणं प्रदर्श्यते। यथा—१८८३ अस्मिन्वर्तमानशकाब्दे वैशाखदर्शे वृषसंक्रान्तिः, ततो ज्येष्ठशुक्लप्रतिपदि मिथुनसंक्रमणं जायते। एवं सति मीनादिस्थ इत्यादिवचनानुसारतो वैशाखदर्शोत्तरं चान्द्रमासद्वयस्य वृषस्थरव्यारब्धप्रथमक्षणवत्त्वेन सर्वतिथिपत्रकारसम्मतोऽधिकज्येष्ठमासो भवति। परं मेषादिस्थे सवितरीत्यादिवचनानुसारेणोत्तरदर्शस्य वृषस्थरवावसितत्वात्पूर्ववैशाखदस्याप्यसंक्रान्तमासस्य वैशाखत्वेन वैशाखोऽधिमासो भवतीति मासनामभेदः स्फुट उपलक्ष्यते। एवमेव पूर्वोक्तोदाहरणद्वये यत्र मार्गशीर्षक्षयस्तत्र धनुःस्थरवाववसितत्वान्न मार्गशीर्षक्षयः, किन्तु तत्पूर्वस्य कार्तिकस्यैव क्षयः। यत्र च पौषक्षयस्तत्र मकरस्थरवाववसितत्वान्न पौषक्षयः, किन्तु तत्पूर्वस्य मार्गशीर्षस्यैव क्षयः।

अथ 'मेषादिस्थे सवितरी'त्यादिपूर्तिपक्षवचनं क्वचिद् व्यभिचरतीति प्रदर्श्यते। यथा—साम्प्रतं स्वल्पान्तरेणाङ्गीकृतेऽष्टाद्रिभागमितसूर्यमन्दोच्चे मकरादिराशिषट्कस्थितरव्युपलक्षितसौरमाससावनदिनसंख्याः क्रमश उपचीयमानास्तथा कर्कादिराशिषट्कस्थरव्युपलक्षितसौरमाससावनदिनसंख्याः क्रमशोऽपचीयमाना भवन्ति। तेन मिथुनस्थरव्युपलक्षितसौरमासप्रमाणं सर्वाधिकं धनुःस्थरव्युपलक्षितसौरमासमानं च सर्वाल्पं भवति। क्षयमासावसरे च स्फुटचान्द्रमासप्रमाणं तदीयसर्वाधिकमानासन्नमेव भवति, अन्यथा क्षयमास एव न सम्भवेत्। मध्यममानेन चान्द्रमासप्रमाणमेकोनत्रिंशत्सावनदिनानि सावयवैकत्रिंशद्घटिकाश्च। स्पष्टमानेन सप्तचत्वारिंशद्घटिकापर्यन्तं तद्वृद्धिस्सप्तदशघटिकां यावत् तद्ह्रासश्च तिथिपत्रेषूपलभ्यते। एवं सति पूर्वोक्तकार्तिकक्षयोदाहरणे पूर्तिपक्षानुसारं कन्यार्केऽवसितश्चान्द्रमासो भाद्रपदः। तदुत्तरासंक्रान्त-

मासदर्शस्यापि कन्यास्थरवौ समाप्यत्वेन पूर्वभाद्रपदवदस्यापि भाद्रपदत्वं भवति। तदुत्तरमासस्य वृश्चिकस्थरविसमाप्यत्वेन कार्तिकत्वमतस्तदुभयमध्यपतितस्याश्विनस्य यत्क्षयत्वमापतति, तद्विरुद्धम्; 'क्षयः कार्तिकादित्रये नान्यतः स्यादि'त्युक्तत्वात्।

अत्रासंक्रान्तमासदर्शोत्तरं तुलार्कावधिर्यावान् कालस्तेनोनितस्य चान्द्रमासस्य तुलास्थरव्युपलक्षितसौरमासतोऽधिकत्वादेव दर्शान्तात्प्राग्वृश्चिकार्को जातः। अन्यथा कार्तिकशुक्लप्रतिपदेव वृश्चिकार्कस्थानं भवेत्। एवमेव मार्गशीर्षशुक्लप्रतिपदि धनुरर्को जात इति कल्प्यताम्। तथा सति क्षयमासप्रसङ्गे चान्द्रमासमानस्य तत्सर्वाधिकमानासन्नत्वाद्धनुःस्थरव्युपलक्षितसौरमासस्य च सर्वदा चान्द्रमासतोऽल्पत्वान्मार्गशीर्षदर्श एव मकरसंक्रमणमवश्यं भवेत्। अतो द्विसंक्रान्तियुक्तस्यास्य चान्द्रमासस्य मकरस्थरवावसितत्वात्पौषत्वम्, तेन मार्गशीर्षक्षयः। इत ऊर्ध्वमसक्रान्तमासपर्यन्तं प्रत्येकसंक्रमणास्थानस्य दर्शान्तात्प्राङ्नियतत्वात् पूर्तिपक्षानुसारेणाश्विनादिमासत्रयस्यैव क्षयः सम्भवति। तच्चोपलब्धिविरुद्धम्। श्रीभास्कराचार्यैः पौषस्य क्षय उक्तः, अतस्तेषामपि मीनादिस्थो रविरित्यादिपक्ष एवाभिप्रेत आसीदित्यवगम्यते।

अत्र केचिन्मीनादिस्थो रविरित्यादिवचनं सृष्ट्यादौ व्यभिचरितीति वदन्ति। तदसमञ्जसम्; मीनान्तमेषाद्योरभेदेन तत्र मीनस्थरव्यारब्धप्रथमक्षणस्य विद्यमानत्वात्।

यत्तु कालमाधवे मेषादीनां शुद्धमाससंज्ञां प्रत्येव प्रयोजकत्वमुक्त्वा षष्टिदिनात्मकाधिमासोत्तरार्द्धस्योत्तरमासशेषत्वेनाधिमासस्योत्तरमाससंज्ञा कृता। तेनादिपक्षानुसारमधिमाससंज्ञा भवति। किन्तु यस्तत्रपूर्तिपक्षानुसारतः क्षयमासोल्लेखः कृतोऽस्ति, तदसङ्गतिः पूर्वं प्रदर्शितैव। वीरमित्रोदये मेषादिसंक्रान्त्युपलक्षिताश्चैत्रादिमासा इति मासलक्षणानुसारं षष्टिदिनात्मकासंक्रान्तमासस्य पूर्ववदुत्तरमाससंज्ञत्वं प्रकल्पितम्। क्षयमासस्य च संक्रान्तिद्वययुक्तत्वात्तस्य मासयुगलात्मकत्वमुक्तम्। किन्तु तथा सति तुलावृश्चिकसंक्रान्तिद्वयविशिष्टक्षयमासावसरे आश्विनकार्तिकयोरेकतरमासकृत्यविलोपो दुर्निवार एव भवेत्। पूर्वराशिस्थे रवौ माससमाप्त्यभावेनोत्तरराशिस्थरवावेव तत्समाप्तेरुत्तरमाससंज्ञा क्षयमासस्य प्रकल्प्येत चेत्पूर्वराश्युपलक्षितमासस्य विलोप एव स्यात्। अतः १८४४ एतच्छकाब्दीयप्राचीनतिथिपत्रे तथा च दशवर्षीयपञ्चाङ्गे

१८८५ अस्मिन् शकाब्दे पूर्तिपक्षानुसारेण यो मार्गशीर्षक्षयोल्लेखः कृतस्तदौचित्यं सुधीभिर्भृशं विभावनीयम्।

रविचन्द्रयोः केन्द्रयोगान्तममावस्येत्यमान्तमानम्, तदीयद्वितीयपरिधियोगान्तममावास्येदमिनमण्डलान्तमानमिति पक्षद्वये साम्प्रतं पूर्वपक्षानुसारत एव लोकव्यवहारः सन्दृश्यते। प्राचीनतिथिपत्रेष्वप्यमान्तमानेनैव क्षयाधिमासा लिखिता उपलभ्यन्ते। तथाहि—१७४४ एतच्छकाब्दीयतिथिपत्रेऽमान्तमानेन सिद्धाः क्षयाधिमासा लिखिता वर्तन्ते। किन्तु तत एकोनविंशतिवर्षोत्तरं १७६३ एतच्छकाब्दीयतिथिपत्रे क्षयमास इनमण्डलान्तमानेन सिद्धोऽपि न लिखितोऽस्ति। एवमेव दशवर्षीयपञ्चाङ्गे १८८५ अस्मिन् शकाब्देऽमान्तमानसिद्धाः क्षयाधिमासा लिखिताः सन्ति। प्रस्तुतप्रबन्धेऽपि सर्वमेतदमान्तमानं स्वीकृत्य विवेचितमस्तीत्यवगन्तव्यम्।

यत्तु केचित्संसर्पस्य मेषादिषट्कस्थत्वे तस्य शुद्धमासत्वं क्षयोत्तराधिमासस्य च मलत्वं तथा संसर्पस्य तुलादिषट्कस्थितत्वे तु तस्य मलत्वं क्षयोत्तराधिमासस्य च शुद्धमासत्वं स्वीकुर्वन्ति। तदपि चिन्त्यमेव, यतो हि तथा स्वीकृते पूर्वोक्तमार्गशीर्षक्षयोदाहरणे क्षयपूर्वभाविकार्तिकाधिमासस्यौत्पातिकत्वेन तत्र शुद्धमासत्वाप्रसक्त्या मार्गशीर्षस्य विलोप एव स्यात्। एकस्यैव दर्शान्तमासस्य क्वचिदपि शास्त्रे मासद्वयत्वानभ्युपगमात्। वस्तुतोऽत्र यां तिथिं समनुप्राप्येति वचनेन कार्तिकाधिकदर्शस्य तदुत्तरशुक्लप्रतिपत्सञ्जातवृश्चिकसंक्रमणसम्बन्धयोग्यतया कार्तिकस्य शुद्धमासत्वं कथमपि निवारयितुं न शक्यम्। एवं सर्वत्रैव क्षयप्राक्तनाधिमासस्य सर्वनिबन्धकारसम्मतं शुद्धमासत्वमप्रत्याख्येयमेव भवति।

एवमत्र केचित्—'यां तिथिं समनुप्राप्ये'त्यार्षवचनस्य क्षयमासोत्तरमप्रवृत्त्या तदेकदेशीयमस्तीति मन्यमानास्तन्नाद्रियन्ते। तदप्ययुक्तम्; तथाहि—क्षयमासप्रसङ्ग संसर्पस्य शुद्धमासत्वसम्पादनार्थं तथा तदुत्तरक्षयावधिकावान्तरमासानां क्रमिकमाससंज्ञाविधानार्थमेव यां तिथिं समनुप्राप्येत्यार्षवचनस्य प्रवृत्तत्वेनात्रत्यतिथिशब्देन दर्शतिथिरेव गृह्यते, येनाभीष्टसिद्धिर्भवति। तथाहि—कल्प्यताम्, यदा दर्शे तुलार्कस्ततोऽतिचारेण शुक्लप्रतिपदि वृश्चिकार्कस्तदुत्तरदर्श एव धनुस्संक्रमणं च भवति तथा कार्तिकाधिमासस्य शुद्धमासत्वसम्पादनार्थं तदुत्तरद्विसंक्रान्तिविशिष्टक्षयमासस्य च मार्गशीर्षसंज्ञाविधानार्थमतिचारेण शुक्लप्रतिपदि सञ्जातवृश्चिकसंक्रमणस्य तत्पूर्वदर्शे सम्बन्धयोग्यतास्वीकार्यैव

भवति। इत ऊर्ध्वं मकरादिमीनान्तसंक्रमणस्थानानां दर्शे नियतत्वात्तुलादिमीनान्तसंक्रमणानां दर्शसम्बन्धः स्फुटमवसीयते। तथैव यत्र दर्शे कन्यार्कस्तदुत्तरशुक्लप्रतिपद्यतिचारेण तुलार्कस्तत्रापि शङ्कवेलान्यायेन तुलार्कसम्बन्धस्तत्प्राक्तनदर्शे संसर्पस्य शुद्धमासत्वसम्पादनार्थं कल्पनीय एव भवति। तेन पूर्ववदत्रापि तुलादिमीनान्तसंक्रमणानां दर्शसम्बन्धो भवति।

अतः पूर्वोक्तविवेचननिष्कर्षानुसारं क्षयपूर्वभाविसंसर्पमासस्य त्रिंशत्तिथिमत्त्वात्तस्य च सर्वनिबन्धकारसम्मतशुद्धमासत्वात्तद्गतान्यनन्यगतिकानि कृत्यानि तत्रैवानुष्ठेयानि, संसर्पोत्तरक्षयावधिकावान्तरमासकृत्यानि क्रमेण तत्तन्मास एवानुष्ठेयानि, शुद्धमासमृतसांवत्सरिकश्राद्धं संसर्पे कार्यम्, संसर्पगतं मृताहे क्रियमाणं मासिकश्राद्धं तत्रावृत्त्या द्विवारं न कार्यम्। तथा यत्संज्ञकः क्षयमासस्तद्गतानन्यगत्यन्तरयुतानि प्रत्याब्दिकश्राद्धादिकृत्यानि क्षयमास एव कार्याणि। एवमेव संसर्पस्य प्राकृतत्वातिदेशवैयर्थ्ये निवारणाय संसर्पोत्तरास्तुलाप्राक्तनाश्च यावन्तो मासाः सम्भवन्ति, तेषां तत्तद्दर्शस्य तदुत्तरप्रतिपत्सञ्जातरविसंक्रमणसम्बन्धयोग्यतां स्वीकृत्य तेषां मासानां तथा तुलोत्तरक्षयावधिकावान्तरमासानां च क्रमागतमासत्वं सम्पादनीयम्, तथैव तिथिपत्रे क्षयमासविलोपनिवारणाय क्षयपूर्ववर्त्यमायां क्षयसम्बन्धिपूर्वसंक्रमणसम्बन्धयोग्यतामारोप्य 'मानादिस्थ' इत्यादिवचनेन क्षयमाससंज्ञाऽवगन्तव्येति कृतमतिविस्तरेण।

———

# परिष्कार-प्रणाल्या उपादेयत्वम्

श्रीहरिरामशास्त्री शुक्लः साङ्ख्ययोगप्राध्यापकः, वा० सं० वि० वि० वाराणसी।

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।
आश्रयः सर्वधर्माणां शश्वदान्वीक्षिकी मता॥

इति रीत्या कौटिलीयार्थशास्त्रस्य विद्यासमुद्देशप्रकरणे चतसृषु विद्यासु प्राथम्येनाभ्यर्हिततमत्वेन सर्वविद्याप्रकाशकत्वेन च समुपवर्णिता न्यायशास्त्रापरनामधेया आन्वीक्षिकी। न्यायशास्त्रमिदं भागद्वये विभक्तं समुपलभ्यते व्यवहारतः—एकः 'प्राचीनन्यायः' इत्याख्यो भागोऽपरश्च 'नव्यन्यायः' इति। प्राचीनन्यायपदेन श्रीमदुदयनाचार्यपर्यन्तैर्नैयायिकैः प्रणीता ग्रन्थास्तत्सिद्धान्ताश्चोच्यन्ते। नव्यन्यायपदेन च गङ्गेशोपाध्यायादिभिर्नैयायिकैर्विरचिता ग्रन्थास्तत्सिद्धान्ताश्चेति प्रायो विदितमेवास्ति विदुषाम्। श्रीमदुदयनाचार्यपर्यन्तैर्विद्वद्भिर्विरचितेषु ग्रन्थेषु बहवस्तावदध्ययनाध्यापनपरम्परायामिदानीं यावद् विद्यमानाः सन्ति। ततः परं श्रीमद्गङ्गेशोपाध्यायप्रभृतिभिर्विरचितेषु ग्रन्थेष्वपि अध्ययनाध्यापनपरम्परायां सन्ति दीधिति-जागदीशी-गादाधरी-कृष्णम्भट्टीप्रभृतयो ग्रन्थाः। श्रीमदुदयनाचार्यादनन्तरं श्रीगङ्गेशोपाध्यायात्पूर्वकालीनैर्विद्वद्भिर्विरचितास्तु ग्रन्था नेदानीं समुपलभ्यन्तेऽध्ययनाध्यापनपरम्परायाम्। तत्र कारणन्तु मध्यकाले तादृशग्रन्थानां रचनाभावो गङ्गेशोपाध्यायग्रन्थेन गतार्थता वा स्यादित्येव वक्तव्यमापतति। प्राचीनन्यायाभिधेषु ग्रन्थेषु परिष्कारप्रणाल्याः प्राधान्यं नोपलभ्यते। नव्यन्यायाभिधेषु तु तस्याः प्राधान्यमनुभूयते।

नव्यन्यायस्योपयोगित्वविचारे कर्तव्ये प्राप्ताप्राप्तविवेकन्यायेन परिष्कारप्रणाल्या उपयोगोऽस्ति न वेति विचार एव प्राधान्येन कर्तव्यताकुक्षावागच्छति। तत्रेदं निवेदनीयतामर्हति। ज्ञानस्यैव सर्वव्यवहारे प्रधानं साधनत्वमित्यत्र न कस्यापि विप्रतिपत्तिः। तत्रापि विविक्तं ज्ञानमेवाभ्यर्हिततमं भवति। यस्य यावदधिकं विशेषज्ञानं भवति, तस्यैव ज्ञातुर्व्यवहारः सुसम्बद्धः सफलश्च भवति। तस्यास्य ज्ञानस्य साधनेषु शब्दात्मकस्य ज्ञानसाधनस्य क्षेत्रे सर्वस्मादधिकं विस्तृतं वर्तते। एकेन

विदुषा विरचितो ग्रन्थो हि तत्कालीनानां भविष्यत्कालीनानां च ज्ञानं समुत्पादयितु-मर्हतीति खलु जानन्त्येव सर्वेऽपि। विविक्तस्य ज्ञानस्योत्पादनाय च शब्दानां परिष्कृतरूपाणामेव सन्निवेशः समर्थो भवति। अतस्तदर्थं क्रियमाणं शब्दगौरवं न दोषावहं वक्तुं शक्यम्। विशेषतश्च यदा प्रतिवादिनां शब्दस्यान्यथार्थकरणे प्रवृत्तिः सम्भाव्यते, तदा त्वतिविचारपूर्वकमन्यूनानतिरिक्तानामसन्दिग्धार्थकानां पदानां प्रयोग एवोचितो भवति। अत एव यत्र गृहस्य क्षेत्रादेर्वा विक्रयपत्रं क्रियमाणं भवति, तत्र महद्धनं व्ययीकृत्य तेभ्यस्तेभ्यो व्यवहाराजीविभ्यस्तत्पत्रं निर्मीयते। तत्र यदि कश्चिद् ब्रवीति—'एतावान्व्ययः किमर्थं भवता क्रियते ? विक्रयपत्रे खल्वेतावता द्रव्येणेदं गृहं मया विक्रीतमिति विषयः केनापि लिखि शक्यतुं एवे'ति; तत्र खल्विदमेवोत्तरयन्ति यद् विक्रयपत्रे लिखितानां शब्दानामर्थान्तरादि कृत्वा यदि विक्रेत्रा व्यवहारः कृतः स्यात्, तर्हि स विक्रयोऽसिद्धो भवेत्, गृहक्षेत्रादिकमपि च प्रत्यावर्तनीयं भवेत्। अतोऽसन्दिग्धबोधार्थं परिष्कृतानां शब्दानां सन्निवेश एव समुचित इति सिद्ध्यति।

नव्यन्याये तावत् परिष्कारावसरेषु निम्नलिखितानां पदानां प्रयोगो बाहुल्येनोपलभ्यते—प्रतियोगिता, अनुयोगिता, अवच्छेदकता (अवच्छिन्नत्वम्), विषयता, विषयिता, प्रकारता (विशेषणता), विशेष्यता, (धर्मिता) संसर्गता, प्रकारिता (प्रकारकत्वम्), विशेष्यिता (विशेष्यकत्वम्), संसर्गिता (संसर्गकत्वम्), आधेयता (वृत्तिः), अधिकरणता, निरूपकता, निरूप्यता, कारणता, (जनकता), कार्यता (जन्यता), व्यापकता, व्याप्यता, प्रतिबध्यता, प्रतिबन्धकता, घटकता, घटितता इत्यादि। एतेषामसाधारणानां पदानां नव्यन्यायग्रन्थेषु निवेशनमेव अस्य काठिन्ये परमं कारणमस्ति। एतस्मादेव च कारणाद् एतत्पदानामर्थं स्वरूपतो यथावदनवबुध्यमानैरियं भाषा 'काकभाषा'त्वेन व्यवह्रियते सोपालम्भम्। वस्तुगत्या आलोच्यमाने नेयं भाषा काकभाषा, नापि नव्यन्यायभाषा, अपितु वादभाषा इत्येव युक्तमुत्पश्यामो वयम्। अत एव च सर्वेऽपि वादग्रन्था व्याकरण-मीमांसा-वेदान्त-ज्योतिष-साहित्यादि-विषयका अनयैव भाषया विरचिताः समुपलभ्यन्ते।

पूर्वोक्तानां शब्दानां विषये प्रश्नोऽयं समुपस्थितो भवति यदेते शब्दाः पारिभाषिकाः सन्ति अथवा परम्पराप्रचलिता एवेति ? तत्रेदं वक्तव्यमापतति यद्येते शब्दाः श्रीगङ्गेशो-

पाध्यायमहादेवैस्तत्पूर्वतनैर्वा कैश्चित् परिभाषिताः भवेयुस्तर्हि व्याकरणादिषु गुण-वृद्ध्यादिशब्दाः परिभाषिताः सन्तीति कृत्वा यथा तेषां परिभाषाप्रकरणमेकमुपलभ्यते, एवमेव एतेषामपि परिभाषा ग्रन्थकृद्भिरवश्यं कृता अभविष्यत्। अतो गङ्गेशोपाध्याया-त्पूर्वमप्येते शब्दाः प्रयुक्ता एवासन्निति प्रतीयते। अत्र एते शब्दा यदि पूर्वमपि प्रचलिताः स्युस्तर्हि प्राचीनेषु न्यायादिग्रन्थेष्वेतेषां प्रयोगो नोपलभ्यत इत्यत्र किं कारणमिति प्रश्न उपतिष्ठते? अत्रेदं वक्तुमर्हं यत् पूर्वं ग्रन्थनिर्माणपद्धतिः वादभाषया नासीत्, अपितु शिष्यहितमात्रमुद्दिश्य सामान्यव्यावहारिकभाषयैव तन्निर्माणमासीत्। यदा प्रभृति वादभाषया ग्रन्थनिर्माणप्रचारोऽभवत्, तदा प्रभृत्यैवैतेषां शब्दानां ग्रन्थे प्रयोगः सम्पन्नः।

इदमपि नातिरोहितं विदुषां यत्पूर्वोक्तेषु बहूनामर्थाः सम्बन्धरूपा एव सन्ति। यथा 'प्रतियोगिता'पदार्थः 'घटस्य अभावः' इत्यादौ षष्ठ्या प्रतीयमानः सम्बन्धविशेषरूप एव भवति। अत एवोक्तं ग्रन्थकृद्भिः,"स्वरूपसम्बन्धात्मिकायाः प्रतियोगितायाः" इत्यादि।

अवच्छेदकतापि सम्बन्धविशेष एव। 'घटो नास्ती'ति प्रतीतौ विशिष्टवैशिष्ट्या-वगाहिन्यां स घटत्वेन सह प्रतियोगितया भासते। उक्तं चावच्छेदकत्वनिरुक्तौ— 'नन्वव-च्छेदकत्वमिह न स्वरूपसम्बन्धविशेषः' इति।

एवमवच्छिन्नत्वमपि। तथा चोक्तं जगदीशभट्टाचार्यैः—"घटो नास्ती'ति प्रतीतौ घटत्वम्, अवच्छिन्नत्वम्, प्रतियोगित्वञ्चेति त्रितयमेव विशेष्यविशेषणभावापन्नं संसर्गः, न तु वस्तुगत्या घटत्वावच्छिन्नं यत् प्रतियोगित्वं तन्मात्रं घटो नेत्यादौ घटत्वावच्छिन्नत्वस्यानुभवसिद्धत्वादि"त्यादिना।

एवं विषयत्वमपि 'घटस्य ज्ञानमि'त्यादौ षष्ठ्या प्रतिपाद्यमानं सम्बन्धरूपतां नातिक्रामति। जिगमिषतीत्यादौ गमधात्वर्थस्य सन्प्रत्ययार्थेन सह अयमेव सम्बन्धो भासते। विषयितापि च 'घटो जिज्ञास्यते' इत्यादौ सन्प्रत्ययार्थेच्छाया धात्वर्थे ज्ञाने भासते संसर्गमुद्रया। एवं प्रकारेण प्रायः पूर्वोक्तेषु बहूनां पदार्थानां सम्बन्धरूपत्वं स्वीकृतमस्ति। विस्तरभयात्सर्वेषामुदाहरणानि नात्रोपस्थापितानि।

अत्रेदं निवेदनीयमस्ति यत्प्राचीनास्तार्किका एतेषां स्वरूपसम्बन्धरूपत्वं स्वीकुर्वन्ति। तथा चैतन्मते प्रतियोगिता प्रतियोग्यादिस्वरूपः सम्बन्धः। अत एव 'स्वरूपसम्बन्धात्मिकायाः प्रतियोगितायाः' इति दीधितिग्रन्थव्याख्यानावसरे 'तत्तदभाव-

प्रतियोग्युभयस्वरूपाया' इति व्याख्यातं जगदीशभट्टाचार्यमहोदयैः। अत एव च द्रव्यागुणकर्मसामान्यविशेषसमवायाभावाः सप्त पदार्थाः' इति विभागो न व्याहन्यते।

नवीनाः पुनर्दीधितिकृत्प्रभृतयो विषयत्वादीनामतिरिक्तपदार्थत्वमेव स्वीकुर्वन्ति। यथोक्तम्— 'विषयतात्वादिवत्प्रतियोगित्वाधिकरणत्वतत्त्वसम्बन्धत्वादयोऽप्यतिरिक्ता एव पदार्था इत्येकदेशिनः' इति ग्रन्थेन सिद्धान्तलक्षणे। विभागव्याघातशङ्कायाश्च तत्त्वज्ञानस्य साक्षादुपयोगिनामेव पदार्थानां प्राचीनग्रन्थे विभजनान्नात्र प्रसर इति समादधति।

अत्रेदमवधेयम्—पूर्वोक्तेषु शब्देषु केचन तादृशाः सन्ति, येषामर्थो विशेष्यविशेषणभावापन्नानेकपदार्थघटितो भवति। यथा—व्यापकता, व्याप्यता, घटकता, घटितत्वादयः। व्यापकताशब्देन तावद् अधिकरणवृत्तिभेदप्रतियोगितावच्छेदकत्वाभावः प्रतीयते। तस्मादिदमेव सिद्ध्यति यत् पूर्वोक्तानां शब्दानां विविक्तं स्वरूपं यदि दृष्टिपथमागच्छति तर्हीयं, नव्यन्यायभाषा नहि, वादभाषा यथावदधिगता भवेत्। एतदधिगतौ सत्यामेव सर्वेऽपि वादभाषया लिखिताः न्यायव्याकरणवेदान्तसाहित्यधर्मशास्त्रज्योतिषादिग्रन्था यथावदधिगता भवितुमर्हन्ति, नान्यथा। अतः सर्वैरप्येतेषां यथावत्स्वरूपं यथावगतं भवेत् तथावश्यमेव यतनीयं विद्वद्भिः। अन्यथा वयं प्रायः इतः पूर्वं पञ्चशतवर्षेषु विरचितेषु ग्रन्थेषु सर्वथाऽनभिज्ञा भविष्यामः, महतः ज्ञानराशेश्च वञ्चिता भविष्यामः।

अन्ते इदमेव वक्तव्यमस्ति—यथा चिकित्सकास्तावद् द्विविधा अनुभवपथमायान्ति, केचन सन्निपातरोगे सन्निपातभैरवरसः, कासरोगे कासारिः, अमुकरोगे तालिसादिचूर्णमित्यादि जानन्तोऽपि सन्निपातभैरवरसादिषु केषां केषां पदार्थानां घटकत्वं तन्निर्माणे पूर्वापरभावेन कथं संयोजनादिकं कर्तव्यमिति च न जानन्ति। अपरे पुनः समेषामौषधानां निर्माणप्रकारं तद्घटपदार्थांश्च यथावज्जानन्ति। उक्तेषु द्विविधेषु द्वितीया एव खलु विशिष्टाः समर्थाश्च वक्तुं शक्यन्ते। त एव खलु प्रतिक्षणं विभिन्नायां सन्निपातादिरोगेषु रोगिणः सम्प्राप्तायामवस्थायां यथावदौषधप्रदाने समर्था भवन्ति। एवमेव परिष्कारप्रणाल्यामपि पूर्वोक्तपदार्थानां यथावत्स्वरूपं जानाना एव अतर्कितरूपेण समागतानां विभिन्नानां दूषणानामुत्तरप्रदानपूर्वकं सर्वस्यामप्यवस्थायामन्यूनानतिरिक्तार्थविषयकज्ञानजननसमर्थशब्दप्रयोगपाटववन्तः सन्तः स्वीयरचना-

द्वारा सूदूरकालपर्यन्तं सर्वेष्वपि विषयेषु विविधज्ञानप्रदा भवितुमर्हन्ति। अत एव श्रीमद्गङ्गेशोपाध्यायादिभिर्ग्रन्थनिर्माणे समादृता परिष्कारप्रणाली सर्वथा विद्वद्भिरुपादेयेति सिद्ध्यति। एतामेवाभिलक्ष्योक्तम्—

मोहं रुणद्धि विमलीकुरुते च बुद्धिं
सूते च संस्कृतपदव्यवहारशक्तिम्।
शास्त्रान्तराभ्यसनयोग्यतया युनक्ति
तर्कश्रमो न कुरुते कमिहोपकारम्॥

---

# भारतीयदर्शनेषु निर्विकल्पकज्ञानतज्ज्ञेययोः स्वरूपविकासः

श्रीजगन्नाथ उपाध्यायः बौद्धदर्शनप्राध्यापकः, वा० सं० वि० वि० वाराणसी ।

भारतीयदर्शनेषु प्रमाणचर्चा कदा प्रारभत इत्यस्य यद्यपि याथातथ्येन निर्णयो दुःशक एव, तथापि प्रायशो दृश्यते यद् दर्शनेषु पदार्थप्रसाधने बाह्यवस्तुसद्वादिभिरेव दार्शनिकैर्मुख्यतः प्रमाणं विविच्यत इति । ईशवीयशताब्दिपूर्वं पश्चाच्च त्रिचतुःशताब्दिषु आसन् बाह्यवस्तुसद्वादिनो वैशेषिकाः साङ्ख्याः सर्वास्तिवादिनो वैभाषिकाः सौत्रान्तिकाश्च । एतेषामस्तिवादो यदा नागार्जुनपादानां सर्वनास्तिवादस्य तर्कशरैर्विकम्पितस्तदा सर्वैरेव बौद्धैरबौद्धैर्वस्तुवादिभिः समेत्य प्रमाणव्यवस्थापनया वस्तुसद्वादः संरक्षितः । एतत्संरक्षणविधावेव भारतीयं न्यायशास्त्रं संव्यकसत् । अत एव वस्तुस्वभावं समर्थयन्तः प्राचीननैयायिका अपरे चार्द्धनैयायिकाः साङ्ख्यादयः सद्वस्तुस्वभावानां पदार्थानां तत्त्वज्ञानं विना मोक्षोऽपि न भवतीति प्रतिज्ञातवन्तः । तथा हि प्रायः चतुर्थशताब्दिजो वसुबन्धुः—"धर्मप्रविचयमन्तरेण नास्ति क्लेशानां यतः शान्तयेऽभ्युपायः" इति; सार्द्धतृतीयशताब्दिको गौतमऋषिः—"प्रमाणप्रमेयादीनां तत्त्वज्ञानान्निःश्रेयसाधिगमः" इति; प्रायः चतुर्थपञ्चमशताब्दिकः प्रशस्तपादः—"धर्माणां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसाधिगमः" इति; प्रायः पञ्चमशताब्दिक ईश्वरकृष्णः "व्यक्ताव्यक्तज्ञविज्ञानान्मोक्षः" इति; चतुर्थशताब्दिको जैनाचार्य उमास्वातिः "तत्त्वार्थश्रद्धानं सम्यग्दर्शनम्" इत्युदाजह्रुः ।

सुविदितमेव यद् वस्तुवादिनः सर्व एव दार्शनिकाः नित्यानित्याभ्यामान्तरबाह्यपदार्थान् विभजन्ते । तत्र नित्यपदार्थानां त्रैकालिकसत्त्वे न परस्परं विवादः । अनित्यानामान्तरबाह्यपदार्थानां सत्त्वेऽसत्त्वे, स्थिरत्वेऽस्थिरत्वे, परिणामित्वेऽपरिणामित्वे, युगपदवस्थानावस्थानादिविषयेऽस्ति विवादः । वस्तुनोऽस्थिरत्वानुरोधेनैव बौद्धेषु वस्तुक्षणिकवादः, अनात्मवादः, जातिगुणादीनां निरासः, सङ्घातवादादयः; वस्तुनः स्थिरत्वानुरोधेन काणादगौतमयोः स्थिरवादः अवयविवादः, आत्मवादः,

सामान्य-समवायादीनां स्वीकारः, शब्दार्थयोः सम्बन्धः, आरम्भवादादयः। वस्तुपरिणामानुरोधेन साङ्ख्येषु परिणामवादः सत्कार्यवादोऽन्योन्यमिथुनवादादयः, जैनेषु च द्रव्यपर्यायवादः परिणामिनित्यतावादश्च सप्तभङ्गीनयादयः प्रक्रान्ताः। आन्तरपदार्थेषु ज्ञानस्यास्थिरत्वे वस्तुवादिनां प्रायश ऐकमत्यमेव। यद्यपि स्थिरवादिनो ज्ञानस्य त्रिक्षणावस्थायित्वम्, अस्थिरवादिनश्च बौद्धा उत्पादानन्तरास्थायित्वरूपं प्रत्युत्पन्नकालिकत्वरूपं क्षणिकत्वमामनन्ति। साङ्ख्येषु वृत्तिज्ञानं स्वरूपतो जडात्मकं सत् परेणात्मरूपेण ज्ञानेन प्रकाश्यते। नैयायिकानां ज्ञानं स्वविषयेष्वजडमपि गुणात्मकत्वादात्मानमनाश्रित्य न प्रकाशयति। स्वरूपतो न प्रकाशते, प्रत्यक्षान्तरेणैव प्रकाशते। ज्ञानस्य क्षणिकत्वादिविषये वस्तुसद्वादिबौद्धजैनप्राभाकरेषु परस्परं विवदमानेष्वपि तच्चेतनात्मकं स्वप्रकाशात्मकमित्यत्र न विवादः; स्वतो वा परतो वा प्रकाशमानस्य ज्ञानस्य प्रकाशत्वे न विवादः। एवम्भूतं ज्ञानं यदि सम्यगस्ति तर्हि तदेव प्रमाणमित्यत्रापि न विवादः। अस्ति हि प्रमाणस्य स्वरूपे सङ्ख्यायां च विप्रतिपत्तिः, न तु तस्य सम्यक्त्वे। विषयानुरोधेन ज्ञानमनुमानादिरूपेण विभज्यमानमपि स्वरूपेण सर्वमपि ज्ञानं प्रत्यक्षमेव। तत् प्रत्यक्षं 'निर्विकल्पकं वा सविकल्पकं वा उभयं वा ? इत्यत्रास्ति दार्शनिकेषु विमतिः।

इदमत्र विशेषतोऽवधेयं यद् यद्यपि बाह्यस्यान्तरस्य वा वस्तुसद्वादस्य संरक्षणविधावेवैते विचारा विकाशमापद्यन्त, तथापि तत्त्वाधिगमाय निर्विकल्पकज्ञानस्य सूक्ष्मालोचनमहत्त्वमधिगत्य असद्वस्तुवादिनोऽपि शून्य-विज्ञान-ब्रह्माद्वयवादिनो बौद्ध-शाङ्करवेदान्तिनः स्वशास्त्रे सविकल्पकनिर्विकल्पकप्रमाणं चर्चितवन्तः। विशेषतः स्वप्रतिपाद्यमलौकिकं परमार्थतत्त्वं व्यवस्थापयितुं ते निर्विकल्पकं प्रत्यक्षं स्वमतानुरोधेन व्याख्यातवन्तः। सर्वेषामेवं वस्तुवादावस्तुवादानां पर्यालोचनेन निर्विकल्पक-सविकल्पकज्ञानविषये त्रयो वादा दार्शनिकानां पर्यवस्यन्ति। तत्र १. निर्विकल्पकमात्रप्रामाण्यवादिनः सद्वस्तुवादिनो बौद्धाः; २. बाह्यासद्वस्तुवादिनश्शाङ्कराद्वैतिनः; ३. अवस्तुवादिनः शून्यवादिनो विज्ञानवादिनश्च सन्ति। सविकल्पकमात्रप्रामाण्यवादिनो रामानुजप्रभृतयो वैष्णवाचार्या वैयाकरणाश्च सन्ति। सविकल्पकनिर्विकल्पकोभयवादिनः शेषाः स्थिरवस्तुवादिनः साङ्ख्या वैशेषिका, गौतमीया मीमांसका जैनाः, एवमस्थिरवस्तुवादिनो बौद्धेषु वैभाषिकाः सौत्रान्तिकाश्च सन्ति।

## निर्विकल्पकज्ञानतज्ज्ञेययोः स्वरूपविकासः

समुपलब्धानां भारतीयन्यायग्रन्थानां पर्यालोचनेन प्रतीयते यत् तेषु निर्विकल्पैकमात्रवादिनो बौद्धा एव। ज्ञानविषये निर्विकल्पक-सविकल्पकवादयोः सुस्पष्टं पुरस्कर्तारोऽपि त एव। यद्यपि उपनिषत्सु "अशब्दमस्पर्शमरूपम्", "यतो वाचो निवर्तन्ते", "अदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमि"त्यादिविशेषणानि निर्विकल्पकज्ञानावाहकानि सन्ति, किन्तु तत्प्रतिपादकवचनानि परमार्थतत्त्वविषयकाणि, कथमपि तानि नैव लौकिकप्रत्यक्षप्रमाणालम्बनानि। तथा च नागार्जुनादिप्राचीनानां मतेऽपि परमार्थतत्त्वविषये एव निर्विकल्पकशब्दप्रयोगो जातः। उपलब्धपुस्तकेषु सर्वप्रथममीशवीयपञ्चमशताब्दिकस्य दिङ्नागस्य प्रमाणसमुच्चये "प्रत्यक्षं कल्पनापोढं नामजात्याद्यसंयुतम्" इत्यनेन निर्विकल्पकप्रत्यक्षस्य लक्षणम्, तद्विषयश्च "स्वसंवेद्यमनिर्देश्यं रूपमिन्द्रियगोचरः" (पृ० १५) इत्यनेन प्रतिपाद्यते। दिङ्नागतः पूर्वं गौतमन्यायस्य प्रत्यक्षसूत्रे "अव्यपदेश्यं व्यवसायात्मकमि"ति पदाभ्यां भाष्यवार्तिककारौ वात्स्यायनोद्योतकरपादौ प्रत्यक्षस्य शाब्दत्वम्, शब्दानुविद्धत्वम्, अनुमितित्वमनवधारणत्वं वा व्यावर्तयतः, समग्रेण च सूत्रेण प्रत्यक्षस्य सामान्यतः लक्षणं प्रतिपादयतः। गौतमीयेषु प्रथमं नवमशताब्दिका वाचस्पतिमिश्रमहाभागास्तात्पर्यटीकायामेतत्पदद्वयेन निर्विकल्पं सविकल्पकञ्चेत्यर्थं सङ्गृह्य विभागपरतया वर्णयन्ति, शेषं च सूत्रं लक्षणपरमिति वदन्ति। उक्तञ्च तैः—

"इह द्वयी प्रत्यक्षजातिः—अविकल्पका सविकल्पका चेति। तत्रोभयी इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारीति लक्षणेन सङ्गृहीताऽपि स्वशब्देनोपात्ता। तत्राविकल्पिकायाः पदमव्यपदेश्यमिति, सविकल्पिकायाश्च व्यवसायात्मकमिति।" (१।१।४)।

तात्पर्यटीकाकारतः पूर्वकाले प्रशस्तपादाचार्यैः स्वभाष्ये प्रत्यक्षलक्षणे यद्यपि निर्विकल्पक-सविकल्पकयोर्नामनी न गृहीते, तथापि पक्षान्तरे गौतमसूत्राभिप्रायानुरोधि अर्थतो लक्षणं गृहीतम्। किञ्च ते ततो विविच्य "सामान्यविशेषज्ञानोत्पत्तौ (अ)-विभक्तमालोचनमात्रं प्रत्यक्षं प्रमाणम्" (पृ० ९८) इति स्वीयं पृथक् लक्षणमुदाहरन्ति। अस्मिन् लक्षणवाक्ये निर्विकल्पकबोधस्याभिप्रायः समाविशति। प्रशस्तदेवस्यास्मिन् लक्षणे दिङ्नागादीनामार्थः प्रभावः स्पष्ट एव लक्ष्यते। षष्ठशताब्दिकाः कुमारिलपादास्तु श्लोकवार्तिके नामग्राहपूर्वकं निर्विकल्पं लक्षयन्ति—"अस्ति ह्यालोचनं ज्ञानं

प्रथमं निर्विकल्पकमि"ति। दिङ्नागस्य प्रत्यक्षद्वयविभागकरणे गौतमसूत्रस्य तद्-भाष्यस्य चोपलभ्येत पारम्परिकः कश्चित् प्रभावः, तथाप्यन्तरङ्गबहिरङ्गपरीक्षया प्रतीयते यत् प्रचुतरः साक्षात् प्रभावस्तु प्राचीनबौद्धदार्शनिकानामेवासीत्। ईशवीय-शताब्दित्रयपूर्वं बौद्धानां तृतीयसंगायने तेषां सकलमभिधर्मपिटकशास्त्रं निर्मितमासीदत्र न केषाञ्चिद् विवादः।

अभिधर्मशास्त्रेषु चित्तविश्लेषणमेव प्रमुखम्। तस्मिन् शास्त्रे चित्तस्य निर्विकल्पकत्वे बहुधा विवेचनमुपलभ्यते। तेषां मते जन्मचित्तादारभ्य मरणचित्तं यावद् एकश्चित्तप्रवाहः प्रवहति। तस्य नाम 'भवाङ्गमि'ति। भवतीति भवः, भवस्य जीवतः सतो वाङ्गं कारणं भवाङ्गमिति तदर्थः। तद्धि सत्त्वस्य स्वभावभूतं निरन्तरं प्रभास्वरं चित्तमस्ति। एतत्समक्षं यदा किञ्चिदालम्बनमागच्छति, तदा सहजं प्रवहतोऽस्योपच्छेदो भवति। एतदुपच्छेदेन भवाङ्गचित्तस्य स्वविषयस्त्यक्तो भवति, पुरःस्थित-बाह्याभिनवालम्बनस्पर्शेन, अभिमुखीभवनरूपेण चक्षुरादिपञ्चेन्द्रियाणां मनस्कारवशाद् आवर्जनमावर्तनं वा कृत्यं भवति। तदानीन्तनो मनस्कारः पूर्वमनस्तो विसदृशं मनः करोति, एतेन चित्तमुपच्छिन्नं सन्नवीनविषयाभिमुखं भवति। एतदेव चक्षुरादि-पञ्चद्वारावर्जनकृत्यं चित्तस्य। अनन्तरं पञ्चद्वारावर्जितस्यैव विषयस्य केनचिदेकेने-न्द्रियेण चक्षुरादिना ग्रहणमात्रं भवति। चक्षुरादिविज्ञानगृहीतस्यालम्बनस्य स्वीकरणं तदाकारेण भानं सम्प्रतीच्छचित्तस्य कृत्यम्। सम्प्रतीच्छचित्तसमर्थितालम्बनस्य लक्षणस्वरूपमीमांसा चित्तस्य सन्तीरणकृत्यम्। आलम्बनस्य लक्षणादिज्ञानानन्तरं तदुपयोगादिविचारश्चित्तस्य व्यवस्थापनकृत्यम्। अनन्तरं विषये व्यवस्थिते तदनुसारि चित्तमतीव सवेगं भवति, एतदेव चित्तस्य जवनकृत्यम्। एतत्कृत्यानुरोधेनैव प्रभास्वरं चित्तं कुशलमकुशलं वा भवति। भवाङ्गचलनादारभ्य एतत् सर्वं कृत्यं चित्तस्य एकक्षण एव भवति, अर्वाचीनाभिधर्मग्रन्थेषु पठितानां सम्प्रतीच्छसन्तीरणपञ्चद्वारा-वर्जन-मनोद्वारावर्जनादिशब्दानां प्राचीनपालिग्रन्थेषु। अत्र व्यवस्थापनकृत्ये न सविकल्पकं ज्ञानं जृम्भते। एतस्मात्पूर्वभूतं चित्तस्य कृत्यं स्वरूपत आलम्बन-ग्रहणरूपं निर्विकल्पकं ज्ञानं चित्तस्य।

ईशातः पूर्वं शताब्दित्रयमारभ्य ईशवीयपञ्चशताब्दयामार्यदिङ्नागकालपर्यन्त-मष्टशताब्द्या बौद्धा अबौद्धाः, ज्ञाता अज्ञाता वा अनेके दार्शनिकसम्प्रदाया आसन्।

तैर्ज्ञानस्य निर्विकल्पकत्वं सुविचारितमिति प्रतीयते। बौद्धदर्शतैषामान्तरालिकानां ज्ञानमतिविपुलम्, अनेकभाषासु विकीर्णम्, अतस्तस्य प्रकाशनं कालसाध्यमिति कृत्वात्र दिङ्नागतः पश्चाद्भूतानामेव मतान्यालम्ब्य विविच्यते।

इदन्तु पूर्वमुक्तमेव यत् स्वाभिमतसद्वस्तुप्रकाशाय सर्वे एव दार्शनिका निर्विकल्पकं ज्ञानमामनन्त्येव। तद्धि सद्वस्तु यद्यलौकिकं तदा तद्ग्राहकं निर्विकल्पकमप्यलौकिकम्। इतरथा लौकिकसद्वस्तुग्राहकं निर्विकल्पकमपि ज्ञानं लौकिकमेव भवेत्। अस्थिरबाह्यसद्वस्तुवादिषु बौद्धेषु सर्वास्तिवादिवैभाषिक-सौत्रान्तिकेषु सद्वस्तुविषये सत्स्वप्यवान्तरभेदेषु वस्तुनः क्षणिकत्वे तस्यार्थक्रियाकारित्वरूपे सत्त्वे च न विवादः। पुरातना बौद्धाः ज्ञानस्य क्षणिकत्वं स्वीकुर्वन्तोऽपि बाह्यवस्तुनः कालत्रयेऽप्यर्थक्रियाकारित्वरूपं सत्त्वममन्यन्त। ततोऽर्वाचीनास्तु कालत्रयवादं प्रतिषिद्धय एकमेव प्रत्युत्पन्नं कालं स्वीकृत्य, तदनुरोधेन प्रत्युत्पन्नकालिकमेकमेव सर्वतः सर्वथा च विविक्तं स्वासाधारणलक्षणयुक्तं प्रत्युत्पन्न-मात्रजातं वस्तु स्वीकुर्वन्ति। अर्वाचीना यथा आन्तरं ज्ञानं क्षणिकं तथा बाह्यं वस्तुजातमुत्पादानन्तरास्थायिरूपं क्षणिकं तद्विषयकमभिलापादिसंसर्गशून्यमर्थमात्र-ग्राहि निर्विकल्पकममन्यन्त। अत एव ते सर्ववाक्पथातीतत्वं वस्तुनः स्वरूपं स्वीकुर्वन्ति। तेषां मते सर्वे हि शाब्दाः प्रत्यया भ्रान्ता एव भवन्तीति। उक्तञ्च दिङ्नागेन—

"न तावदर्थः शब्दबुद्धेर्विषयः, तत्स्वरूपानवभासतः। तत्र शब्दसङ्केता-भावाच्च।.........वस्तुतोऽवस्तुप्रतिभासिनः शाब्दाः प्रत्ययाः" इति (१५५ पृ०)। धर्मकीर्तिनाऽप्युक्तम्—"न विशेषेषु शब्दानां प्रवृत्तावस्ति सम्भवः" इति (२।१२६)। शान्तरक्षितेनाप्युक्तम्—

यस्य यस्य हि शब्दस्य यो यो विषय उच्यते।
स स संविद्यते नैव वस्तूनां सा हि धर्मता॥ ८७०॥ इति

स्थिरसद्वस्तुवादिषु गौतमीयाः काणादाश्च सामान्यात्मकं विशेषात्मकं सामान्यविशेषोभयात्मकं स्थेयभाजं वस्तु स्वीकुर्वन्ति। उक्तञ्च न्यायवार्तिके—"विषयः सामान्यविशेषतद्भेदात् त्रेधा" (पृ० १४) इति। बौद्धानामिवैतेषां मते स्वलक्षण-मेवार्थो नास्ति। ते हि जात्यादिमन्तमर्थमभिलापसंसर्गयोग्यप्रतिभासं तज्जनितं

चार्थसामर्थ्यजं ज्ञानं सविकल्पकप्रमात्मकं स्वीकुर्वन्ति, तथापि स्वरूपतोऽर्थज्ञानाय शब्दरूपं निमित्तं नैव सहन्ते। उक्तं च वात्स्यायनभाष्ये—"अर्थज्ञानकाले न समाख्याशब्दो व्याप्रियते, व्यवहारकाले तु व्याप्रियते" इति (१।१।४)। बौद्धानामिव निर्विकल्पकेऽर्थज्ञाने समाख्याशब्दव्यापारमस्वीकृत्यापि नैयायिकैर्निर्विकल्पकबोधस्य जात्यादिस्वरूपमात्रावगाहित्वं स्वीक्रियत एव। अत एवोक्तं प्रशस्तपादभाष्येऽपि—"सामान्यविशेषज्ञानोत्पत्तौ अविभक्तमालोचनमात्रं प्रत्यक्षं प्रमाणम्" (पृ० ९८)। तात्पर्यटीकायामप्युक्तम्—"प्रथममालोचितोऽर्थः सामान्यविशेषवान्" (पृ० ११७) इति। एवमविभक्तं स्वरूपतो जात्यादिसहितमपि ज्ञानं स्वरूपालोचनमात्रं भवेदेवेति न्याय-वैशेषिकयोराग्रहः। बौद्धदृष्ट्या जातेरत्यन्ततुच्छत्वाद् अन्यापोहविधया शब्दविकल्परूपत्वेनैव सविकल्पककाल एव तस्य ग्रहः, न निर्विकल्पके। न्यायदृष्ट्या तु जातेर्वस्तुभूतत्वात् तदभावे द्रव्यगुणकर्मादिव्यवस्थाया विशीर्यमाणत्वात् शब्दानुवेधगन्धं विनैव जात्यादीनां निर्विकल्पबोधः सम्मतः।

प्रायः गौतमस्यैव पदार्थव्यवस्थामनुकुर्वद्भिः कुमारिलपादैरपि निर्विकल्पेन सामान्यविशेषयोर्ग्रहणं स्वीक्रियते। उक्तं हि श्लोकवार्तिके—"निर्विकल्पकबोधेऽपि द्वयात्मकस्यापि वस्तुनो ग्रहणमि"ति (१७१)। एवं न्यायाभिमतं समवायसम्बन्धमस्वीकृत्यापि व्यक्तौ नित्यगताया जातेर्निर्विकल्पगोचरत्वं तैः स्वीक्रियते। बौद्धमते विकल्पमात्रभूताया जातेः स्वीकारात् निर्विकल्पे तद्भाने निर्विकल्पकत्वव्याघातरूपो दोषः, सामान्यस्य तद्विषयत्वं स्वीकृत्यापि, कुमारिलमते न भवति; यतो हि तैर्निर्विकल्पेऽननुवृत्तमव्यावृत्तं च शुद्धवस्तुमात्रं गृह्यते। उक्तं च श्लोकवार्तिके—

न विशेषो न सामान्यं तदानीमनुभूयते।
तयोराधारभूता तु व्यक्तिरेवावशिष्यते ॥ ११३ ॥ इति।

इदमेव बालमूकादिसदृशं संमुग्धं ज्ञानं निर्विकल्पकमिति लक्षणं सामान्यसमवायवादिषु तद्विरोधिषु वा पश्चाद्वर्तिवस्तुवादिदर्शनेषु साङ्ख्ययोगादिषु प्रासरत्। अत एव "शब्दादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिः" इति साङ्ख्यकारिकायाः (२८) तत्त्वकौमुद्यां "बुद्धीन्द्रियाणां संमुग्धवस्तुमात्रदर्शनमालोचनम्" इत्युक्तम्।

जैनमतेऽपि भवति संमुग्धग्रहणं निर्विकल्पके। तन्मते इन्द्रियजन्यसांव्यावहारिकप्रत्यक्षे मतिज्ञानमवग्रहेहावायधारणाभेदेन चतुर्विधं भवति। अवग्रह-

ज्ञानेऽर्थस्य सामान्यस्य च ग्रहणं भवति। उक्तं सर्वार्थसिद्धौ पूज्यपादेन—'विषयविषयिसन्निपाते सति दर्शनं भवति, तदनन्तरमर्थग्रहणमवग्रहः" इति (१–१५ पृ० १११)।

उपर्युक्तबाह्यवस्तुवादिविभिन्नलक्षणपर्यालोचने निर्विकल्पकं द्विविधं सिद्ध्यति—प्रथमं जातिगुणक्रियादिविरहितं शब्दाभिलापसंसर्गयोग्यप्रतिभासाद्यपेतं सर्वतः सर्वथा च विविक्तं वस्तुमात्रावगाहि स्फुटाभज्ञानम्, द्वितीयं स्वरूपतो वस्तुजात्यादिसहितं संसर्गानवगाहि अविभक्तं वस्तुमात्रावगाहि संमुग्धाकारमालोचनमात्रं ज्ञानम्। एवं द्विविधेऽपि निर्विकल्पके वस्तुमात्रावगाहित्वेन संसर्गानवगाहित्वेन च समानत्वेऽपि स्फुटाभत्वास्फुटाभत्वाभ्यां सामान्यसत्त्वासत्त्वाभ्यामस्ति महान् भेदः। अयञ्च भेदो बौद्धतदितरयोर्विरोधिवस्तुस्वभावस्वीकारादेवेत्यत्र न बहु प्रतन्यते।

जात्यादीनामपि संमुग्धमालोचनज्ञानं निर्विकल्पकं स्वीक्रियते चेत्, रामानुजाचार्यमते तत् सविकल्पकं सविशेषमेव पर्यवस्यति। अस्ति हि निर्विकल्पकलक्षणं यतीन्द्रमतदीपिकायाम्—"निर्विकल्पकं नाम गुणसंस्थानादिविशिष्टं प्रथमपिण्डग्रहणम्। सविकल्पकं तु सप्रत्यवमर्शं गुणसंस्थानादिविशिष्टं द्वितीयादिपिण्डग्रहणम्। उभयमप्येतद् विशिष्टविषयमेव। अत एव श्रीभाष्ये आचार्यैरुच्यते—"प्रत्यक्षस्य निर्विकल्पसविकल्पभेदभिन्नस्य न निर्विशेषवस्तुनि प्रमाणभावः। सविकल्पकं जात्याद्यनेकपदार्थविशिष्टविषयत्वादेव सविशेषविषयम्। निर्विकल्पकमपि सविशेषविषयमेव, सविकल्पके स्वस्मिन्ननुभूतपदार्थविशिष्टप्रतिसन्धानहेतुत्वादि"ति। आचार्योद्भावितोऽयं सर्वोऽपि दोषो देशतः कालतो विविक्तस्य जात्यादिहीनस्य वस्तुनः स्फुटाभत्वप्रतीतिरूपे लक्षणे नैव पर्यवस्यति।

अत एव भगवत्पादशङ्करानुयायिभिरद्वैतिभिः सुरेश्वर-चित्सुखादिभिः प्राचीनैरर्वाचीनैश्च अप्पय्यदीक्षित-धर्मराजाध्वरीन्द्रादिभिर्जात्यादिसंसर्गानवगाह्यवाखण्डार्थज्ञानं निर्विकल्पमित्यवबोध्यते। अत एव तैः सविकल्पकस्यापि वैशिष्ट्यावगाहित्वं विशेषणज्ञानजन्यत्वरूपेण न स्वीक्रियते। निर्विकल्पकस्यैतद्रूपस्वीकारदेवाद्वैतवादिनामेतन्मतं यत्तेऽभेदविषयकं प्रत्यक्षमपि यथाकथञ्चित् लौकिकनिर्विकल्पकमित्युदाहरन्ति। अत एव शिखामणौ "लोकवेदयोः प्रत्यक्षसिद्धं साक्षिरूपप्रत्यक्षेण निश्चितं यत्तन्निर्विकल्पकम्" इति लक्षणं कृतम्। अत एव च वेदान्तपरिभाषायां निर्विकल्पककोटौ 'सोऽयं देवदत्तः, तत्त्वमस्यादि'वाक्यजन्यज्ञानयोर्लौकिकालौकिकयोः

समानरूपेण प्रवेशः। तत्त्वशुद्धिकारा अपि आहुः—"न प्रत्यक्षं घटपटादि तत्सत्त्वं वा गृह्णाति, किन्त्वधिष्ठानत्वेन घटाद्यनुगतं सन्मात्रम्। तथा च प्रत्यक्षमपि सद्रूपब्रह्माद्वैतसिद्ध्यनुकूलमेव" इति (सिद्धान्त० २६६ पृ०)। सङ्क्षेपशारीरकाचार्या अपि "स्वप्रकाशतया प्रसक्तप्रकाशं ब्रह्मैवाज्ञानविषय इति स्वीकृत्य, 'तद्बोधकमेव तत्त्वावेदकं प्रमाणमि'ति कृत्वा ब्रह्मैव प्रमितिविषय" इत्यामनन्ति।

इत्थमद्वैतवेदान्ताभिमतनिर्विकल्पकलक्षणं देशकालानवच्छिन्नवस्तुनः प्रमितित्वेन जात्याद्यनेकविकल्पानवगाहित्वेन च अन्यदर्शनतोऽधिकं बौद्धलक्षणानुकूलमिति पर्यवस्यति। बौद्धलक्षणांतोऽस्यायं विशेषो यद् बौद्धा निर्विकल्पकबोधे शब्दसंसर्गं दूरतोऽपि न सहन्ते। श्रुतिशब्दप्रामाण्यवादिनो वेदान्तिनस्तु तात्पर्यविषयाभेदमात्रविषयकवृत्तिमुखेन श्रुतिवाक्यं निर्विकल्पकनिमित्तं स्वीकुर्वन्ति।

प्रायो बौद्धनिर्विकल्पकलक्षणपक्षपातिन आगमिकास्तु परावाग्रूपं परमशिवस्य तत्त्वभूतं स्वातन्त्र्यं स्वीकुर्वाणा अपि तज्ज्ञानस्य निर्विकल्पकत्वं बोधयन्ति। उक्तं हि महामाहेश्वरेणाभिनवगुप्तपादेन परमार्थसारे ( ३१५ पृ० )—

सर्वविकल्पविहीनं शुद्धं शान्तं लयोदयविहीनम्। इति (१०-११)।

तत्र श्रीमद्योगराजाचार्येण "ननु वाग्रूपं चेत् परं तत्त्वं तर्हि काल्पनिकं शब्दसम्भिन्नत्वात्, कथं शुद्धप्रकाशवपुषि कल्पनायोगः" इत्याशङ्क्य, उक्तम्—"परप्रमातरि योऽयं पराहन्ताचमत्कारः स वाग्रूपोऽपि निर्विकल्पः। विकल्पो हि अन्यापोहलक्षणो द्वयं घटाघटरूपमाक्षिपन्नघटाद् व्यवच्छिन्नं घटं विनिश्चिनोति। प्रकाशस्य पुनः पराहन्ताचमत्कारसारस्यापि नाप्रकाशरूपः प्रकाशादन्यः प्रतिपक्षतया विद्यत" इति ( पृ० ३२ )।

एवमेव सर्वत्रैवागमिकाः प्रायशो बौद्धा इव सविकल्पकस्य निर्विकल्पकप्रत्यक्षपृष्ठभावित्वं वस्त्वनपेक्षित्वं च स्वीकुर्वन्ति। उक्तं च तन्त्रालोकेऽभिनवगुप्तपादैः—

अविकल्पात्मसंवित्तौ या स्फुरत्तैव वस्तुनः।
सा सिद्धिः, न विकल्पात्तु वस्त्वपेक्षा विवर्जितात्॥ १८३॥ इति।

अस्याष्टीकायां जयरथेन प्रतिपादितम्—"सर्वो हि विकल्पः स्मृतिः" इति नीत्या विकल्पानां तावत् स्मृतिरेव रूपम्। सा चासन्निहिते पूर्वानुभूते एवार्थे प्रवर्तत इति विकल्पानां वस्त्वनपेक्षित्वमि'ति।

अत एव वाग्रूपं परतत्त्वं स्वीकुर्वद्भिर्महावैयाकरणैर्भर्तृहरिमहाभागैस्तदनुयायिभिरपि तस्य निर्विकल्पत्वं निर्विकल्पस्य चाव्यपदेश्यत्वादिकं प्रतिपादितम्। वाक्यपदीये तट्टीकायाञ्च "अनादिनिधनं ब्रह्म शब्दतत्त्वमि"त्यस्य व्याख्यानं कुर्वता हरिवृषभेण तत्त्वस्य निर्विकल्पकत्वं स्पष्टमेवोक्तम्—"सर्वपरिकल्पातीततत्त्वं भेदसंसर्गसमतिक्रमेण समाविष्टमि"ति। अग्रे चोक्तं भर्तृहरिणा, वाचैव निर्विकल्पकबोध इति—

वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती।
न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी ॥ १।१२५ ॥ इत्यादिना।

अत्र हरिवृषभो वाङ्मूलकं ज्ञानं निर्विकल्पकमिति लक्षणमपि उदाहरति—"योऽपि प्रथमोपनिपाती बाह्येष्वर्थेषु प्रकाशः स निमित्तानामपरिग्रहेण वस्तुस्वरूपमात्रमिदं तदित्यव्यपदेश्यया वृत्त्या प्रत्यवभासयति" इति। एतेनेदमपि प्रतीयते यत् शब्दानुवेधबलाद् वैयाकरणाः सविकल्पकमात्रवादिन इति प्रचलितो वादः सविकल्पकानुरोधेनैव सम्मत इति।

एतेन निर्विकल्पकलक्षणविकासप्रघट्टकेनेदमायातं यद् विभिन्नबहुसत्पदार्थवादिनामेव ज्ञानक्षेत्रे विभिन्नं निर्विकल्पलक्षणं स्वस्वानुरूपं परिष्कृतम्। तथा च सन्मिथ्यावस्तुवादिशाङ्कराभासवाद्यागमिक-शब्दतत्त्ववादिवैयाकरणानां सर्वेषां मतानि सदद्वैतवादिनां मते पर्यवस्यन्ति। येनैव निर्विकल्पकलक्षणेन स्वीकृतेन बाह्यवस्तूनामस्थिरत्वं स्थिरत्वम्, केषाञ्चित्पदार्थानां सत्त्वमन्येषामसत्त्वं च सिद्ध्यति, तेनैव तदनुरूपं परिष्कृतेन जगतो मिथ्यात्वादिकम्, ब्रह्मणः, शिवस्य, वाचो वा अद्वैतत्वमपि सिद्ध्यति। नैतावदेव माहात्म्यं निर्विकल्पकस्य, बौद्धेषु तेनैवाचार्यनागार्जुनपादानां सर्वस्वभावनास्तित्ववादोऽपि सिद्ध्यपि। उक्तं हि माध्यमिककारिकायाम्—

अपरप्रत्ययं शान्तं प्रपञ्चैरप्रपञ्चितम्।
निर्विकल्पमनानार्थमेतत्तत्वस्य लक्षणम् ॥ १८।९ ॥ इति।

निर्विकल्पकलक्षणेनायं शून्यवादः कथं प्रसरतीति नेह प्रतन्यते।

अस्मिन् निबन्धे तत्तद्दर्शनेषु पदार्थव्यवस्थानुरोधेन निर्विकल्पलक्षणं कथं

संव्यकसदित्येतावन्मात्रमुपस्थापितम्। अत्र विमर्शसापेक्षा अधोलिखिता अन्येऽपि विषया अवशिष्यन्ते, कालान्तरे च ते विमृष्टा भविष्यति—

१. निर्विकल्पकं ज्ञानं प्रमाणं न वा ? तत्परोक्षविषयं प्रत्यक्षं वा ?

२. अलौकिकं निर्विकल्पज्ञानं भवति न वा ? भवति चेद् अलौकिकं निर्विकल्पज्ञानं नाम किम् ? दर्शनेषु तस्य कथं विकासो विस्तारश्च ?

विभिन्नदर्शनेषु निर्विकल्पकज्ञानस्य कानि कानि करणानि ?

---

# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

१. एषा देशे विदेशे च लब्धप्रसारा त्रैमासिकी संस्कृतपत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं ज्येष्ठभाद्रमार्गशीर्षफाल्गुनपूर्णिमासु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु मौलिकानुसन्धानप्रवृत्तेः समालोचना-प्रवृत्तेश्चोद्बोधनं प्रोत्साहनं चास्ति।

४. अस्यां वाराणसेयसंस्कृतविश्वविद्यालयस्य विदुषां मौलिकविचारपूर्णा अनुसन्धानप्रधाना निबन्धाः प्रकाश्यन्ते।

५. लेखकेन प्रकाशितस्य निबन्धस्य पञ्चविंशतिः प्रतिमुद्रणान्युपलब्धानि स्युः।

६. अस्या वार्षिकं मूल्यं सप्त रूप्यकाणि, प्रत्यङ्कं च रूप्यकद्वयं वर्तते।

७. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः "सम्पादक, सारस्वती सुषमा, वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी-२" इति संकेतेन विधेयः।

---

प्रकाशक—क्षेत्रेशचन्द्र चट्टोपाध्याय, संचालक—अनुसंधान संस्थान, संस्कृतविश्वविद्यालय, वाराणसी।

मुद्रक—अमलकुमार वसु, इण्डियन प्रेस (प्राइवेट) लिमिटेड, वाराणसी शाखा।